तदहरेव कर्तव्यम्।। ३०।।

**मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम्।**
**वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्।। ३१।।**

**अन्वय** - ब्राह्मणस्य मंगल्यम् क्षत्रियस्य बलान्वितम् वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् स्यात्।

**हिन्दी अर्थ** - ब्राह्मण का नाम शुभत्व-श्रेष्ठत्व भावबोधक शब्दों से, क्षत्रिय का बल-पराक्रम, वैश्य का धन-ऐश्वर्य भाव-बो धक शब्दों से और रक्षणीय, पालनीय भावबोधक शब्दों से नाम रखना चाहिए। अर्थात् व्यक्ति के वर्णसापेक्ष गुणों के आधार पर नामकरण करना चाहिए।। ३१।।

**मेधातिथिः।** तत्र स्वरूपमवधारविष्यन्नाह। मङ्गलाय हितं तत्र वा साधु मङ्गल्यमिति व्युत्पत्तिः। अभिमतस्यार्थस्य चिरजीवित्वबहुधनादेर्द ष्टाद ष्टसुखफलस्य सिद्धिर्मङ्गलम्। तदभिधानमेव शब्दस्य हितत्वं साधुत्वं चेति तद्धितसिद्धिः। 'साधुत्वं' नाभिप्रेतार्थसिद्धिप्रतिपादनमेव विवक्षितम्, किं तर्हि, य आशास्यते तद्वचनेनैव सिद्धिः।

समासाद्वा युःसिद्धिः धनसिद्धिः पुत्रलाभ इत्यादिः प्रतीयते, तद्धिताद्वा हितनिमित्तप्रयोजनार्थीयात्। तत्र ग ह्ये तद्धितान्तं प्रतिषिद्धं "कृतं कुर्यान्न तद्धितमिति"। समासे पि पदद्वयैकार्थीभावस्तत्र बह्वक्षरप्रयोगप्रसङ्गः। यतो वक्ष्यति 'शर्मवद्ब्राह्मणस्ये' त्युपपदनियमम्। तत्र चतुरक्षरे त्र्यक्षरे वा नाम्नि शर्मशब्दे चोपपदे प चाक्षरं षडक्षरं नाम भवति। तच्च प्रतिषिद्धं "द्व्यक्षरं चतुरक्षरं वा कुर्यादिति"। तेन यद्यत्कि चित्प्रायेण सर्वस्याभिलषणीयमगर्हितं पुत्रपशुग्रामकन्याधनादि तद्वचनाः शब्दा नामधेयत्वेन विनियोक्तव्या शर्मान्ताः। तेन गोशर्मा धनशर्मा हिरण्यशर्मा कल्याणशर्मा मङ्गलशर्मेत्यादिशब्दपरिग्रहः सिद्धो भवति।

अथवा 'मङ्गलं धर्मः तत्साधनं मङ्गल्यं नाम।

"कतमत्पुनर्धर्मसाधनं नाम"। य एते देवताशब्दाः इन्द्रो ग्निर्वायुः। तथा ऋषिशब्दाः-.वसिष्ठो विश्वामित्रो मेधातिथिः। तेषामपि धर्मसाधनत्वमस्ति। 'ऋर्षीतर्पयेत्पुण्यकृतो मनसा ध्यायेदिति।' "देवतानाम षीणां च द्विजानां पुण्यकर्मणाम्। प्रातः प्रबुद्धः श्रीकामो नरो नामानि कीर्तयेद्" इति।

मङ्गलग्रहणाच्च यदप्रशस्तं यमो म त्युरित्यादि तन्निरस्यते, यच्चानर्थकं डित्थादि यद च्छानिमित्तम्।

क्षत्रियस्य बलान्वितम्। बलसंयुक्तं बलवाचि। अन्वयः सम्बन्धः। शब्दस्यार्थेन सम्बन्धः प्रतिपादकभाव एव। सामर्थ्यं बलम् तद्येन प्रतिपाद्यते ताद शं नाम क्षत्रियस्य कर्तव्यम्। 'शत्रुन्तपः' 'दुर्योधनः, 'प्रजापाल' इत्यादि। येन विभागेन च नामनिर्देशो जातिचिह्नम्।

एवं वैश्यस्य धनसंयुक्तम्।

न चात्र पर्याया एव ग ह्यन्ते "धनं वित्तं स्वापतेयमिति"। किं तर्हि येन प्रकारेण तत्प्रतिपत्तिः। यदि वा धनादिशब्दप्रयोगादर्थसम्बन्धाद्वा। धनकर्मा महाधनः गोमान्धान्यग्रह इति।

एवं सर्वत्र द्रष्टव्यम्। तथा चान्वितादिशब्दप्रयोगो बलान्वितं धनसंयुक्तमिति। इतरथा एवमेवावक्ष्य'द्बलनामानि कुर्यादिति'। स्वल्पत्वाद्बलाद्यर्थवाचिनामानन्त्याच्च पुरुषव्यक्तीनां दुरवधाने भेदे व्यवहारोच्छेद एव स्यात्।

शूद्रस्य जुगुप्सितम्। कृपणको दीनः शबरक इत्यादि।। ३१।।

**शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम्।**
**वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्।। ३२।।**

**अन्वय** - ब्राह्मणस्य शर्मवद् राज्ञः रक्षासमन्वितम् वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् स्यात्।

**हिन्दी अर्थ** - ब्राह्मण का नाम शर्मवत्=कल्याण, शुभ, सौभाग्य, सुख, आनन्द, प्रसन्नता भाव वाले शब्दों को जोड़कर रखना चाहिए। जैसे देवशर्मा, विश्वामित्र, वेदव्रत, धर्मदत्त आदि, क्षत्रिय

का नाम रक्षक भाव वाले शब्दों को जोड़कर रखना चाहिए जैसे महीपाल, धन जय, ध तराष्ट्र, देववर्मा, कृतवर्मा, वैश्य का नाम पुष्टि-सम द्धि द्योतक शब्दों को जोड़कर जैसे -धनगुप्त, धनपाल, वसुदेव, रत्नदेव, वसुगुप्त, और शूद्र का नाम (प्रेष्यसंयुतम्) सेवकत्व भाववाले शब्दों को जोड़कर रखना चाहिए जैसे देवदास, धर्मदास, महीदास।

**मेधातिथिः।** अत्र स्वरूपग्रहणं पाठानुक्रमश्चादौ मङ्गल्यमन्ते शर्मशब्दः। तथा चोदाहृतम्।

क्षत्रियादिनाम्नां तु नैतत्सम्भवति। रक्षाशब्दस्य स्त्रीलिङ्गस्य श्रवणात्पुंसां सामानाधिकरण्यानुपपत्तेः। तस्मादेकोपक्रमत्वात्समाचाराच्च सर्वत्रार्थग्रहणम्। वाक्यसभेदाच्च समुच्चयः। यन्मङ्गल्यं तच्छमार्थवत्। शर्म शरणमाश्रयः सुखं च। अर्थग्रहणात्स्वामिदत्तभवभूत्यादिशब्दपरिग्रहः इन्द्रस्वामीन्द्राश्रयः इन्द्रदत्तः। तदाश्रयता प्रतीयते। एवं सर्वत्रोन्नेयम्।

"अथ को यं हेतुर्वाक्यभेदात्समुच्चय इति। व्रीहिभिर्यजेत यवैर्यजेतेति किं न समुच्चय इति।"

उच्यते। लिङ्गदर्शनमात्रमेतत्पौरुषेयत्वात् ग्रन्थस्य। विकल्पे भिप्रेते। मङ्गल्यं शर्मवद्वेति लाघवादवक्ष्यत्। वाक्यभेदे हि द्विराख्यातोच्चारणम्। तद् गुरु भवति।

रक्षा परिपालनं पुष्टिर्व द्धिर्गुप्तिश्च। गोव द्धो धनगुप्त इति। प्रेष्यो दासः ब्राह्मणदासो देवदासो ब्राह्मणाश्रितो देवताश्रित इति।।३२।।

**स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।**

**मङ्गल्यं दीर्घवर्णान्तरमाशीर्वादाभिधानवत्।। ३३।।**

**अन्वय** - स्त्रीणां सुखोद्यम् अक्रूरम् विस्पष्टार्थं मनोहरम् मङ्गल्यं दीर्घवर्णान्तरम् आशीर्वादाभिध ानवत्।

**हिन्दी अर्थ** - स्त्रियों का नाम सुखपूर्वक उच्चारण किया जा सकने वाला कोमल वर्णों वाला स्पष्ट अर्थ वाला भावयुक्त अन्त में दीर्घ अक्षर वाला, तथा आशीर्वाद का वाचक होना चाहिए (जैसे-कल्याणी, वन्दना, विमला, भाग्यवती, प्रियंवदा आदि।। ३३।।

**मेधातिथिः।** पुंसं इत्यधिकृतत्वात्स्त्रीणामप्राप्तौ नियम्यते।

सुखेनोद्यते सुखोद्यम्। स्त्रीबालैरपि यत्सुखेनोच्चारयितुं शक्यते तत्स्त्रीणां नाम कर्तव्यम्। बाहुल्येन स्त्रीणां स्त्रीभिबार्लश्च व्यवहारस्तेषां च स्वकरणसौष्ठवाभावान्न सर्वं संस्कृतं शब्दमुच्चारयितुं शक्तिरस्ति। अतो विशेषेणोपदिश्यते। न तु पुंसामसुखोद्यमभ्यनुज्ञायते। उदाहरणं 'मङ्गलदेवी' 'चारुदती' 'सुवदनेत्यादि'। प्रत्युदाहरणं 'शर्मिष्ठा', 'सुश्लिष्टाङ्गी'ति।

अक्रूरमक्रूरार्थवाचि। क्रूरार्थवाचि क्रूरार्थं 'डाकिनी' 'परुषेति'।

विस्पष्टार्थं यस्यार्थो व्याख्यानगम्यो न भवति, श्रुत एव विदुषामविदुषां वा र्थप्रतीतिं करोति। अविस्पष्टार्थं यथा, 'कामनिधा' 'कारीषगन्ध्येति'। 'कामस्य निधेव निधा तया कामस्तत्रैव तिष्ठती'त्येवं यावन्न व्याख्यातुं तावन्नावगम्यते। एवं करीषगन्धेर्दुहिता कारीषगन्ध्येति व्याख्यानमपेक्ष्यते।

मनोहरं चित्ताह्लादकरं, 'श्रेयसी'। विपरीतं तु 'कालाक्षी'।

शर्मवती मङ्गल्यम्। विपरीतम् 'अभागा' 'मन्दभागेति'।

दीर्घो वर्णो न्ते यस्य। विपरीतं शरत्।

आशिषं वदती'त्याशीर्वादम्' 'अभिधानं' शब्दः, तयोर्विशेषणसमासः। तद्यस्मिन्नस्ति विद्यते तत् आशीर्वादाभिधानवत्। 'सपुत्रा' 'बहुपुत्रा' 'कुलवाहिकेति'। एते ह्यर्था आशीर्विषया। विपरीता 'अप्रशस्ता' 'अलक्षणेति'।

"अथ मङ्गल्यस्याशीर्वादस्य च को विशेषः"।

न कश्चित् व त्तपूरणार्थं तु भेदेनोपादानम्।। ३३।।

**चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं ग हात्।**

**षष्ठे न्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले।। ३४।।**

**अन्वय** - शिशोः ग हात् निष्क्रमणम् चतुर्थे मासि, अन्नप्राशनं षष्ठे मासि यद्वा कुले इष्टं मङ्गलम् कर्तव्यम्।

**हिन्दी अर्थ** - बालक का घर से प्रथम बार बाहर निकालने का 'निष्क्रमण संस्कार' चौथे मास में और अन्न खिलाने का संस्कार-'अन्नप्राशन छठे मास में अथवा जब भी परिवार में अभीष्ट अथवा शुभ समय प्रतीत हो, तब करना चाहिए।।३४।।

**विशेष** - (क) "चतुर्थे मासि निष्क्रमणिका सूर्यमुद्दीक्षयति तच्चक्षुरिति।" (पार० ग ह्य० १।७५।५-६)

=चतुर्थ मास में निष्क्रमण संस्कार करे। बालक को बाहर ले जाकर सूर्यदर्शन कराये।

(ख) "जननाद्यास्त तीयो ज्योत्स्नस्तस्य त तीयायाम्।" (गौ० ग ह्य० ५।८।१)

= या फिर जन्म के पश्चात् तीसरे शुक्लपक्ष की त तीया को निष्क्रमण करे।

(ग) "षष्ठे मासि अन्नप्राशनम्। दधिमधुघ तमिश्रितमन्नं प्राशयेत्।" (आश्व० ग ह्य० १।१६।१-५)

= छठे मास में बालक को अन्नप्राशन कराये और दही, शहद, घी मिश्रित भोजन चटाये।

"छठे महीने बालक को अन्नप्राशन करावे।" (सं०वि० ५८)

**मेधातिथिः।** जन्मचतुर्थमासे ग हादबहिर्निष्क्रमणमादित्यदर्शनं शिशोर्बालस्य कर्तव्यम्। त्रीन्मासान् गर्भग ह एव वासयेत्। शिशग्रहणं शूद्रस्यापि प्राप्त्यर्थम्। एवं षष्ठे मास्यप्यन्नप्राशनम्। प चमासान्क्षीराहार एव। यद्वा कुले दारकस्य श्रेयस्यं मङ्गल्यं पूतनाशकुनिकैकव क्षोपहारादि प्रसिद्धम्। कालविशेषे वा तत्कर्तव्यम्। अयं च सर्वसंस्कारशेषः। तेन नामधेयमुक्तलक्षणव्यतिरेकेणापि यथाकुलधर्मं लक्ष्यते। 'इन्द्रस्वामी' 'इन्द्रशर्मा' 'इन्द्रभूमिः' 'इन्द्रघोष' 'इन्द्रात' 'इन्द्रविष्णुः' 'इन्द्रदेवः' 'इन्द्रज्योति' 'इन्द्रयशा' इत्यादि कुलभेदेनोपपन्नं भवति।। ३४।।

**चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।**

**प्रथमे ब्दे त तीये वा कर्तव्यं श्रुतिचोदनात्।। ३५।।**

**अन्वय** - सर्वेषामेव द्विजातीनाम् चूडाकर्म धर्मतः श्रुतिचोदनात् प्रथमे अब्दे त तीये वा कर्तव्यम्।

**हिन्दी अर्थ** - सभी द्विजातियों=ब्राह्मण, क्षत्रिय, वैश्य वर्णों के इच्छुकों का चूडाकर्म=मुण्डन संस्कार धर्मानुसार वेद की आज्ञानुसार प्रथम वर्ष में अथवा तीसरे वर्ष में करना चाहिये।।३५।।

**विशेष** - (क) "त तीये वर्षे चौलम्।" (आश्व० ग ह्य० १।१७।१)

=त तीय वर्ष में मुण्डन संस्कार किया जाता है।

(ख) "सांवत्सरिकस्य चूडाकरणम्।" (पार० ग ह० २।१।१)

= एक वर्ष के बालक का मुण्डन किया जाता है।

**मेधातिथिः।** 'चूड़ा' शिखा तदर्थं 'कर्म' चूडाकर्म। केषुचिन्मूर्द्धदेशेषु केशानां स्थापनं रचनाविशेषरचैतच्चूडाकर्मोच्यते।

प्रथमवर्षे त तीये वा। ग्रहसौस्थित्यापेक्षा विकल्पः।

श्रुतिनोदनादित्यनुवादस्तन्मूलतयैव प्रामाण्यस्योक्तत्वात्। अथवा श्रुतिशब्देन न विधायकान्येव वाक्यान्युच्यन्ते, किं तर्हि मन्त्राः। ते च रूपात् चूडाकर्म-या जना इतिवद् अद ष्टं-प्रकाशयन्ति। 'यत्क्षुरेण मार्जयेते'त्यादि (पारस्कर २.१.१६)। तेन समन्त्रकमेतत्कर्मेत्युक्तं भवति। विशेषापेक्षायां गाह्यो विधिरङ्गीक्रियते। अतः शूद्रस्य नायं संस्कारः, द्विजातिग्रहणाच्च। अनियतकालं तु केशवपनं शूद्रस्यार्थप्राप्तं न निर्वायते।। ३५।।

**गर्भाष्टमे ब्दे कुर्वीत ब्राह्मणस्योपनायनम्।**

**गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।। ३६।।**

**अन्वय** - ब्राह्मणस्य गर्भाष्टमे अब्दे, राज्ञ गर्भात् एकादशे (अब्दे) विशः गर्भात्तु द्वादशे (अब्दे) उपनायनम् कुर्वीत्।

**हिन्दी अर्थ** - ब्राह्मण-बालक का गर्भ से आठवें वर्ष में, क्षत्रिय-बालक का गर्भ से ग्यारहवें वर्ष में और वैश्य-बालक का गर्भ से बारहवें वर्ष में उपनयन संस्कार करना चाहिये।। ३६।।

**विशेष** - विद्वानों ने इस श्लोक का अर्थ इस प्रकार से भी किया है - ब्राह्मण वर्ण के इच्छुक को (माता-पिता की इच्छा के आधार पर प्रयोग है।) उपनयन=गुरु के पास पहुंचाना अर्थात् यज्ञोपवीत संस्कार गर्भ से आठवें वर्ष में करे, क्षत्रिय वर्ण के इच्छुक का गर्भ से ग्यारहवें वर्ष में और वैश्य वर्ण के इच्छुक का गर्भ से बारहवें वर्ष में उपनयन संस्कार करना चाहिये।। ३६।।

**मेधातिथिः।** गर्भस्थस्य यः संवत्सरस्तत आरभ्य यो ष्टमो ब्दः। गर्भशब्देन साहचर्यात्संवत्सरो लक्ष्यते। न हि मुख्यया व त्त्या गर्भस्य संवत्सरो ष्टम इति व्यपदेशं लभते। तस्मिन्नौपनायनं ब्राह्मणस्य कुर्वीत। उपनयनमेवोपनायनम्। स्वार्थिको ण्। अन्येषामपि द श्यते" (पा० सू० ६।३।१८७) इत्युत्तरपदस्य दीर्घः। छान्दसत्वाद्वोभयपदव द्धिः। उपनयनमिति हि एष संस्कारो वेदविदां ग ह्यस्म तिषु प्रसिद्धो मौ जीबन्धनापरपर्यायः। उपनीयते समीपं प्राप्यते येनाचार्यस्य स्वाध्यायाध्यनार्थं न कुड्यं कटं वा कर्तु तदुपनयनम्। विशिष्टस्य संस्कारकर्मणो नामधेयमेतत्।

गर्भादेकादशे राज्ञः। गर्भात्प्रभ ति गर्भाद्वा परो च एकादशो ब्दस्तत्र क्षत्रियस्य कर्तव्यम्। राजशब्दो यं क्षत्रियजातिवचनोनाभिषेकादिगुणयोगमपेक्षते ग्रन्थेषु तथा प्रयोगदर्शनात्, ब्राह्मणादिजातिशब्दसाहचर्याच्च। गुणविधिषु च क्षत्रियशब्ददर्शनात् 'क्षत्रियस्य तु मौर्वीति'। यस्तु राजशब्दस्य क्षत्रियादन्यत्र जनपदेश्वरे वैश्यादौ प्रयोगः स गौण इति वक्ष्यामः। मुख्ये चासति गौणस्य ग्रहणम्। तथा च ग ह्यकारः-"अष्टमे वर्षे ब्राह्मणमुपनयेदेकादशे क्षत्रियं द्वादशे वैश्यमिति।" भगवांश्च पाणिनिः एवमेव प्रतिपन्नो 'राज्ञः कर्म राज्यं' इति राज्यशब्दस्य राजशब्दं प्रकृति ब्रुवन्नैव जनपदैश्वर्येण राजशब्दार्थप्रसिद्धिमाह। एवं गर्भात्तु द्वादशे ब्दे विशः वैश्यस्य।। ३६।।

**ब्रह्मवर्चसकामस्य कार्यं विप्रस्य प चमे।**

**राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनो ष्टमे।। ३७।।**

**अन्वय** - इह ब्रह्मवर्चस् कामस्य विप्रस्य प चमे बलार्थिनः राज्ञः षष्ठे अर्थिनः वैश्यस्य अष्टमे (उपनयनत्) कार्यम्।

**हिन्दी अर्थ** - इस संसार में ब्रह्म तेज की इच्छा रखने वाला ब्राह्मण का पांचवे वर्ष में, बल की चाह रखने वाले क्षत्रीय का छठे वर्ष में तथा धन चाहने वाले वैश्य का आठवें वर्ष में उपनयन संस्कार करना चाहिये।। ३७।।

**मेधातिथिः।** पित धर्मेणापत्यं व्यादिशति 'ब्रह्मवर्चसी मे पुत्रः स्यादिति' पित कामनया पुत्रो व्यपदिष्टस्तत्कामस्येति। पुत्रस्य बालत्वान्नवंविधा कामना सम्भवति।

"ननु चैवमन्यकृतात्कर्मण अन्यस्य फले भ्युपगम्यमाने कृताभ्यागमदोषापत्तिः। अकाम्यमानं च फलं भवतीत्येतदप्युत्क्रान्तशब्द- प्रमाणन्यायमर्यादयोच्यते"।

नैष दोषः। श्येनवदेतद्भविष्यति। श्येनमभिचरन्करोत्यभिचर्यमाणश्च म्रियते। अथोच्यते "कामिन एवैतत्फलम्। शत्रुमरणं हि यजमानः कामयते। तदेव प्राप्नोतीति, नाकर्त गामिता फलस्य"-अत्रापि विशिष्टपुत्रवत्ता लक्षणमुपनेतुरेव फलम्। यथा पुत्रस्यारोग्येण पितुः प्रीतिः एवं ब्रह्मवर्चसेनापि अतो धिकुतस्य कर्त श्च तत्फलमन्वयानुसारी हि शास्त्रार्थावसायः। इह च पुत्रस्य फलकामेनैवं कर्तव्यमित्यन्वयः प्रीतीयते। न च यथाश्रुतान्वयत्यागे कि चन प्रमाणमस्ति। एतेन पितुरौर्ध्वदेहिकः पुत्रकृत उपकारो व्याख्यातः। तत्रापि हिं पुत्रः कर्ता पित त प्तिश्च फलम्। तथा च लिङ्गं "आत्मा

वै पुत्र नामासीति" पित्रैव हि तावच्छ्राद्धमात्मसम्प्रदानकं वस्तुतः कृतमेव येनापत्योत्पादनमेवमर्थमेव कृतम्। यथा 'सर्वस्वारे म तस्यार्भकपवमानात् ये परा चः पदार्थास्तेष्वपि यजमानस्यैव कर्त त्वम्। 'ब्राह्मणाः संस्थापयत यज्ञमिति' प्रैषेण, दक्षिणाभिर्वरणेन वा प्रयोगसमाप्तावृत्विजां विनियोक्त त्वात्-एवमिहापि तादर्थ्येन पुत्रस्योत्पादनाद्यच्छ्राद्धादिकं पित्रर्थं क्रियते पित्रैव तत्कृतं भवति।

अध्ययनविज्ञानसम्पन्नं 'ब्रह्मवर्चसम्'।

बलं सामर्थ्यम्, आभ्यन्तरं बाह्यं च। उत्साहशक्तिर्महाप्राणता चेत्येतदाभ्यन्तरम्। बाह्यं च हस्त्यश्वरथपदातिकोशसम्पत्। तदुक्तं स्वाङ्गभ्युच्चयं सांयौगिकानां चार्थानामिति।

ईहा चेष्टा, बहुना धनेन कृषिवाणिज्यादिव्यवहारः।

सर्वत्र गर्भादिसङ्ख्या वर्षाणाम्। गर्भादिति ह्यनुवर्तते।। ३७।।

**आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।**

**आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः।। ३८।।**

**अन्वय** - ब्राह्मणस्य आषोडशात् क्षत्रबन्धोः आद्वाविंशात् विशः आचतुर्विंशतेः सावित्री नातिवर्तते।

**हिन्दी अर्थ** - सोलह वर्ष तक ब्राह्मण की, बाईस वर्ष तक क्षत्रिय और चौबीस वर्ष तक वैश्य की सावित्री का अतिक्रमण नहीं होता अर्थात् इस अवस्था तक उपनयन संस्कार हो सकता है।। ३८।।

**विशेष** - आश्वालायन ग ह्यसूत्र में उपनयन काल के अतिक्रमण का विधान निम्न है :-

"आषोडशात् ब्राह्मणस्यानतीकालः।। ५।। आद्वाविंशात् क्षत्रियस्य, आचतुर्विंशाद्वैश्यस्य।।६।। (आश्व० ग ह्यसूत्र १।१६।६)

-ब्राह्मण के सोलह, क्षत्रिय के बाईस और वैश्य के बालक का चौबीस वर्ष पूर्व-पूर्व यज्ञोपवीत होना चाहिये।"

**मेधातिथिः।** एवं तावन्मुख्यकाम्यावुपनयनकालावुक्तौ। इदानीं पितुरभावे व्याध्यादिना वा कथंचिदनुपतीते माणवके कालातिपत्तावनुपनेयता प्राप्ता, सत्यपि कालस्याङ्गत्वे तद्भावे धिकारनिव त्तेः। यथा सायम्प्रातःकालातिपत्तावग्निहोत्रस्याकरणे। अतो विहितकालव्यतिरेकेण प्रतिप्रसवार्थमिदमारभ्यते।

यावत्षोडशं वर्षं गर्भादारभ्य तावद् ब्राह्मणस्योपनयनार्हता न निवर्तते। सावित्रीशब्देन तदनुवचनसाधनमुपनयनाख्यं कर्म लक्ष्यते। नातिवर्तते नातिक्रान्तकालं भवतीत्यर्थः।

एवमाद्वाविंशात्क्षत्रबन्धोः क्षत्रियजातीयस्येत्यर्थः। बन्धुशब्दो यं क्वचित्कुत्सायां प्रवर्तते, "यत्स्वं कथं वेत्स ब्रह्मबन्धविति"। ज्ञातिवचनः यथा "ग्रामता जनता चैव बन्धुता च सहायता। महेन्द्रस्याणगम्या सौ भूमिभागभुजां कुतः।।" द्रव्यवचनो "जात्यन्ताच्छ बन्धुनीति" (पा० सू० ५।४।६)। तत्र पूर्वयोरर्थयोरसम्भवात्त तीयो र्थो ग्रह्यते। द्वाविंशतेः पूरणो द्वाविंशो ब्दः तद्धितार्थः।

आ चतुर्विंशतेर्विशः। प्राप्तो प्यत्र पूरणप्रत्ययो व त्तानुरोधान्न कृतः, प्रतीयते तु तदर्थः। न हि समुदायविषयायाश्चतुर्विंशतिसंख्याया अवधित्वेन सम्भवः। तदवयवस्तु चतुर्विंशो भवति संवत्सरो वधिः। आङ्मभिविधौ व्याचक्षते।

लिङ्गदर्शनं चोदाहरन्ति। "गायत्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्" इति। एतेषां च छन्दसामियता कालेन द्वौ पादौ पूर्येते। तावन्तं कालं बलवन्ति न त्यजन्ति स्वाश्रयभूतान्वर्णान् त तीये तु पादे पक्रान्ते गतरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति समाप्तिमुपयान्ति। यथा "प चाशता स्थविरो मनुष्यः" इति। अतश्च नेतैन वयमुपासितानीति त्यजन्ति तं वर्णम्। ततो 'न गायत्रो ब्राह्मणो, न त्रैष्टुभो राजन्यो, न जागतो वैश्य' इति। सविता देवता यस्या ऋचः सा सावित्री; सा च गायत्री

द्ष्टव्या प्रदर्शिता, ग ह्याच्च। एवं क्षत्रियस्य त्रिष्टुप् सावित्री 'आकृष्णेनेति'। वैश्यस्य जगती "विश्वा रूपाणीति" ।। ३८।।

**अत ऊर्ध्वं त्रयो प्येते यथाकालमसंस्कृताः।**
**सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः।। ३६।।**

**अन्वय** - यथाकालमसंस्कृताः असंस्कृताः एते त्रयः अपि अतः ऊर्ध्वं सावित्रीपतिताः आर्यविगर्हिताः व्रात्याः भवन्ति।

**हिन्दी अर्थ** - निर्धारित समय पर संस्कार न होने पर इस अवस्था के बीतने के बाद ये तीनों ब्राह्मण, क्षत्रिय, वैश्य ही सावित्री-यज्ञोपवीत से पतित हुए आर्य=श्रेष्ठ व्यक्तियों द्वारा निन्दित 'व्रात्या'=व्रत से पतित व्रात्यसंज्ञक कहलाते हैं।।३६।।

**मेधातिथिः।** अस्मात्कालादूर्ध्वं परेण त्रयो प्येते वर्णाः ब्राह्मणादयो यथाकालं यस्योपनयनकालः तत्रानुकल्पिके प्यसंस्कृता अकृतोपनयनाः। सावित्रीपतिता उपनयनभ्रष्टा भवन्ति। व्रात्याश्च संज्ञया। 'आर्यैः' शिष्टैः 'विगर्हिताः' निन्दिताः। व्रात्यसंज्ञाव्यवहारप्रसिद्धयार्थो यं श्लोकः। अनुपनेयत्वं तु पूर्वेणैव सिद्धम्।। ३६।।

**नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।**
**ब्राह्मान् यौनांश्च सम्बन्धान्नाचरेद् ब्राह्मणैः सह।। ४०।।**

**अन्वय** - ब्राह्मणः एतैः अपूतैः सह कर्हिचित् आपदि अह विधिवत् ब्राह्मान् यौनान् च सम्बन्धान् न आचरेत्।

**हिन्दी अर्थ** - द्विजों में कोई भी व्यक्ति इन पतितों के साथ कभी आपात्काल में भी नियमपूर्वक विद्याध्ययन-अध्यापन-सम्बन्धी ओर विवाह-सम्बन्धी व्यवहारों को न करे।। ४०।।

**मेधातिथिः।** एतैर्व्रात्यैरपूतैरकृतप्रायश्चित्तैर्विधिवद्याद शो विधिः प्रायश्चित्तशास्त्रेणोपदिष्टः 'तांश्चारयित्वा त्रीन्कृच्छ्रानिति'-आपद्यपि हि कर्हिचित्कस्या चिदप्यापदि न सम्बन्धानाचरेत्कुर्यात्तैः सह।

किं सर्वसम्बन्धनिषेधो नेत्याह ब्राह्मान्यौनांश्च। 'ब्रह्म' वेदः। तन्निमित्ताः सम्बन्धाः याजना य०।पनप्रतिग्रहाः। न ते याज्याः न याजकाः कर्तव्याः। एवं नाध्याप्या नैतेभ्यो ध्येतव्यम्। वेदार्थं विदुषः प्रतिग्रहाधिकारादेषो पि ब्राह्मसम्ब न्धो भवति। 'यौनः सम्बन्धः' कन्याया दानादाने।

ब्राह्मणग्रहण प्रदर्शनार्थम्।

अस्माच्च दोषदर्शनाद् व्रात्यतापरिहारार्थे पितुरभावे पि व्युत्पन्नबुद्धिना माणवकेनाप्यात्मना त्मोपनाययितव्य इति प्रतीयते। काम्यो ह्ययमाचार्यस्य विधिः। तत्राचार्यत्वमकामयमानो यदि कश्चिन्न प्रवर्तते तदा माणवकेन प्रार्थयितव्यो दक्षिणादिना। तथा च श्रुतिः - "सत्यकामो जावालः हारिद्रमतं गौतममियाय ब्रह्मचर्यं भवति वत्स्यामीति" स्वयमाचार्यमभ्यर्थितवानुपनयनार्थम्।।४०।।

**कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः।**
**वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च।। ४१।।**

**अन्वय** - ब्रह्मचारिणः आनुपूर्व्येण कार्ष्णरौरवबास्तानि चर्माणि शण क्षौम आविकानि च वसीरन्।

**हिन्दी अर्थ** - तीनों वर्णों के ब्रह्मचारी क्रमशः आसन के रूप में बिछाने के लिए काला, म ग, रुरुम ग और बकरे के चर्म को तथा ओढ़ने-पहरने के लिये सन, रेशम और ऊन के वस्त्रों को धारण करें।। ४१।।

**मेधातिथिः।** कृष्णशब्दो यद्यपि कृष्णगुणयुक्तवस्तुमात्रे वर्तते "कृष्णा गौः, कृष्णः कम्बलः" इति तथापीह स्म त्यन्तराद्रौरवसाहचर्याच्च म ग एव प्रतीयते। रुरुम र्गजातिविशेषः। बस्तः छागः। सर्वत्र विकारे वयवे वा तद्धितः। कृष्णाजिनं ब्राह्मणो, रुरुचर्म क्षत्रियो, वैश्यश्छागचर्म वसीरन्नाच्छादयेयुः।

शणक्षुगोणसितत्र कृतानि च वस्त्राणि। च शब्देः समुच्चये। तत्रानुत्तरीयाणि शाणादीनि। चर्माण्युत्तरीयाण्यौचित्यात् कौपीनाच्छादनानि च वस्त्राणि। आनुपूर्व्येण नैकेकस्य सर्वैरभिराम्बन्धोनापि व्युत्क्रमेण। प्रथमस्य ब्रह्मचारिणः प्रथमेन वस्त्रेण च सम्बन्धो द्वितीयस्य द्वितीयस्थानस्थेन। तथा च दर्शितम्।

ननु चान्तरेणापि वचनं लोकत एवैतत्सिद्धं, "चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैरिति" यथाक्रमं सम्बन्धप्रतिपत्तिः, चूर्णिता वज्रेणाक्षिप्ताः अनिलेन दग्धा अग्निनेति।

उच्यते। भवेदेतदेवं यदि भेदेन निर्देशः स्यात्समसङ्ख्यात्वं च। इह तु 'ब्रह्मचारिण' इत्येकशब्दोपादानान्न क्रमो वगम्यते। त्रयश्च ब्रह्मचारिणः। षडनुदेशिनः त्रीणि चर्माणि वस्त्राणि। आनुपूर्व्यग्रहणे तु सति वाक्यान्तरोपात्तः क्रम आश्रीयते। तथा च चर्मभिः सम्बध्य पुनर्ब्रह्मचारिपदमावर्त्य वासोभिः सम्बध्यते। ततः यथा सङ्ख्यमनुदेशः समानामितिः (पा० सू० १।३।१०) ।। ४१।।

**मौ जी त्रिव त्समा श्लक्ष्णा कार्या विप्रस्य मेखला।**

**क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी।। ४२।।**

**अन्वय** - विप्रस्य मेखला मौ जी क्षत्रियस्य मौर्वी ज्या वैश्यस्य शणतान्तवी त्रिव त्समा श्लक्ष्णा कार्या।

**हिन्दी अर्थ** - ब्राह्मण की मेखला=तगड़ी 'मूँज' नामक घास की बनी होनी चाहिए क्षत्रिय की धनुष की डोरी जिससे बनती है उस 'मुरा' नामक घास की, और वैश्य की सन के सूत की बनी हो जो तीन लड़ों को एकत्र बांट करके चिकनी बननी चाहिये।। ४२।।

**मेधातिथिः।** मु जस्त णजातिस्तद्विकारो मौ जी। सा ब्राह्मण्यस्य मेखला रशना कर्तव्या मध्यबन्धनी। त्रिव त् त्रिगुणा। समा न क्वचित्सूक्ष्मा न क्वचित्सूक्ष्मतरा किं तर्हि सर्वत एव समा। श्लक्ष्णा तनुत्वगुणयुक्ता परिघ ष्टा च।

क्षत्रियस्य पुनर्ज्या धनुर्गुणः। सा कदाचिच्चर्ममयी भवति, कदाचित्त णमयी, भङ्गोमादिरज्जुर्वा। तदर्थमाह मौर्वीति। तया धनुषो वतारितया श्रोणीबन्धः कर्तव्यः। यद्यपि त्रिव त्तादिर्गुणो मेखलामात्राश्रितो न मौ ज्या एव, तथा पि ज्यायाः स्वरूपनाशप्रसङ्गान्नभवति।

शणतन्तुविकारः शणतान्तवी। छान्सत्वादुत्तरपदव द्धिः। अथवा केवलात्तन्तुशब्दात्तद्धिते कृते तदन्तस्य शणैः सम्बन्धः - शणानां तान्तवीति। प्रकृतेर्विकारः प्रकृतिसम्बन्धितया व्यपदिश्यते। 'गव्यं घ तं' 'देवदत्तस्य पौत्र' इति। 'तन्तु'' सूत्रं शणमौ जीवत्कर्तव्या। ग ह्यकारैर्वैश्यमेखलायाः त्रिव त्तादिधर्मः सुस्पष्ट एवोक्तः।। ४२।।

**मु जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः।**

**त्रिव त्ता ग्रन्थिनैकेन त्रिभिः प चभिरेव वा।। ४३।।**

**अन्वय** - मु ज अलाभे तु (क्रमशः) कुशा-अश्मन्तकबल्वजैः त्रिव त्ता एकेन ग्रन्थिना त्रिभिः प चभिः वा कर्तव्याः।

**हिन्दी अर्थ** - यदि उपर्युक्त मूँज आदि न मिलें तो कुश, अश्मन्तक और बल्वज नामक घासों से उसी प्रकार तिगुनी= तीन बटों वाली करके फिर एक गांठ लगाकर अथवा तीन या पांच गांठ लगाकर मेखलाएं बनानी चाहिएं।। ४३।।

**मेधातिथिः।** आदिशब्दलोपमत्र स्मरन्ति। मु जाद्यलाभ इति। कर्तव्या इति च बहुवचनमुपपन्नतरम्। भिन्नजातिसम्बन्धितया सुव्यक्तो मेखलाभेदः। एकजातिसम्बन्धित्वे तु केवलव्यक्तिभेदालम्बनं बहुवचनं स्यात्। विप्रस्येति च प्रकृतस्य बहुवचनेन परिणामः कर्तव्यः। विकल्पश्चैकविषयत्वे स्यात्। न च सम्भवत्यां गतौ विकल्पो युक्तः।

तेन मु जाभावे कौशी। ज्याया अभाव श्मन्तकेन। शाणानां बल्वजैः। त णौषधिवचनात्कुशादयः। प्रतिनिधिनियमश्चायम्। कुशाद्यभावे प्यन्मु जादिसद शमुपादेयम्। त्रिव त्ता ग्रन्थिनैकेन। नायं

ग्रन्थिङ्ख्याभेदो वर्णभेदेन। अपि तु प्रत्येकं विकल्पः। कुशादिमेखलास्वप्ययं ग्रन्थिभेदो धर्मभेदश्चोद्यमानः स्म त्यन्तरसमाचारस्यानित्यत्वे पि द्रष्टव्यः।। ४३।।

**कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वव तं त्रिव त्।**

**शणसूत्रमयं राज्ञो वैशस्याविकसौत्रिकम्।। ४४।।**

**अन्वय** - विप्रस्य उपवीतम् कार्पासम् राज्ञः शणसूत्रमयं वैश्यस्य आविकसौत्रिकम् स्यात् (तत्) ऊर्ध्वव तम् त्रिव त् (भवेत्)।

**हिन्दी अर्थ** - ब्राह्मण का यज्ञोपवीत कपास का बना, क्षत्रिय का सन के सूत का बना और वैश्य का भेड़ की ऊन का बना होना चाहिए, वह उपवीत दाहिनी ओर से बायीं ओर का बटा हुआ, और तीन लड़ों से तिगुना करके बना हुआ होना चाहिए।। ४४।।

**मेधातिथिः।** उपवीतशब्देन वासो विन्यासविशेष उच्यते। वक्ष्यति "उद्ध ते दक्षिणे पाणाविति"। तच्च धर्ममात्रम्। तस्य न कार्पासता सम्भवत्यतो धर्मेण धर्मी लक्ष्यते, यस्यासौ विन्यासस्तत्कार्पासमुच्यते। अर्श आदित्वाद्वा मत्वर्थीयो कारः कर्तव्यः, उपवीतवदुपवीतमिति।

ऊर्ध्वव तं ऊर्ध्वां दिशं प्रति वर्त्यते वेष्ट्यते। त्रिव त् त्रिगुणम्। कर्तनिकाभ्यो लब्धसूत्रभावस्य त्रिगुणीकृतस्येदमूर्ध्वनिवर्तनं विधीयते। संहत्य तन्तुत्रयं ऊर्ध्ववेष्टिनेन रज्ज्वाकारं कृत्वा तेनोपवीतं कुर्यात्। सा च रज्जुरेकैव धारयितव्या तिस्रः प च सप्त वा। यज्ञसम्बन्धाद्धि तद्यज्ञोपवीताख्यां लभते। यज्ञार्थो यमुद्यत इति भक्त्योपचर्यते। तत्रेष्टिपशुसोमानां यज्ञरूपतयैकत्वादेकतन्तुकं क्रियते। अग्नित्रयसाध्यत्वादहीनैकाहसत्रभेदाद्वा त्रितन्तुकम्। सोमसंस्थानां सप्तसङ्ख्यत्वात्सप्त वा तन्तवः। "त्रीणि सवनानि त्रिसन्ध्येनेति" प च। सूत्राभावे पि पटादिना पि कर्तव्यम्। स्म त्यन्तर एवमुक्तम्।

अविः मेषस्तस्य सूत्रं तेन कृतं आविकसूत्रिकम्। अध्यात्मादिवाट्ठञ् कर्तव्यः। 'अविकसूत्रिकमिति' वा पठितव्यम्। तत्र च मत्वर्थीयेन ठना रूपसिद्धिः।। ४४।

**ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।**

**पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः।। ४५।।**

**अन्वय** - ब्राह्मणः बैल्वपालाशौ क्षत्रियः वाटखादिरौ वैश्यः पैलवौदुम्बरौ दण्डान् धर्मतः अर्हन्ति।

**हिन्दी अर्थ** - ब्राह्मण बेल या ढाक के, क्षत्रिय बड़ या खैर के, वैश्य पीपल या गूलर के दण्डों को नियमानुसार धारण कर सकते हैं।। ४६।।

**मेधातिथिः।** सत्यपि द्वन्द्वनिर्देशे गुणविधिष्वेकत्वश्रवणा'त्केशान्तिक' इति 'प्रतिग ह्योप्सितं दण्डम्' इति च विकल्पितं एकदण्डधारणं। प्रतीयते। "बैल्वः पालाशो ब्राह्मणस्य दण्ड" इति ग ह्य० गौतमीये चैकदण्डग्रहणमेवोक्तम्। इह केवला दण्डसत्ता श्रूयते। 'दण्डानर्हन्ति'। दण्डा एते ब्रह्मचारिणां योग्याः। कस्यां क्रियायां इत्येतदत्रैवोक्तं उत्तरत्र भविष्यति 'प्रतिग ह्योप्सितमिति'। तस्मिंश्च ग्रहणे दण्डस्योपायत्वाद्विवक्षितमेकत्वमत इह द्विवचननिर्देश देवश्चद्वर्षेद्बहवः कृषिं कुर्युरिति यथाप्राप्तानुवादः।

बिल्वपलाशवटखदिरपीलूदुम्बरा व क्षजातिविशेषनामधेयानि। बिल्वस्य विकारो वयवो वा 'बैल्वः'। एवं सर्वत्र। प्रदर्शनार्थाश्चैते।

'यज्ञिया वा सर्वेषामिति' वचनात्।

एतान्दण्डान्वक्ष्यमाणे कार्ये अर्हन्ति। धर्मतः शास्त्रतः।। ४५।।

**केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।**

**ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः।। ४६।।**

**अन्वय** - प्रमाणतः ब्राह्मणस्य दण्डः केशान्तिकः राज्ञः ललाटसम्मितः कार्यः विशस्तु नासान्तिकः स्यात्।

**हिन्दी अर्थ** - माप के अनुसार ब्राह्मण का दण्ड केशों तक, क्षत्रिय का माथे तक बनाना चाहिए

और वैश्य का नाक तक ऊँचा होना चाहिये।। ४६।।

**मेधातिथिः।** आकारविशेषवचनो दण्डशब्दः। दीर्घं काष्ठं सम्मितायामं 'दण्ड' इत्युच्यते।

कयित्तस्य दैर्ध्यमित्यपेक्षायामाह। केशान्तं गच्छति प्राप्नोति केशान्तगो मूर्द्धप्रमाणः। पादाग्रादारभ्य। मूर्द्धावधिः केशान्तगः। केशा वा न्तोस्येति। केशान्तकः। समासान्तः ककारः। प्रमाणतः प्रमाणेनानेन युक्तो दण्डः कार्यः कारयितव्यः। ब्राह्मणस्याचार्येण। ललाटसम्मितः ललाटान्तमितः ललाटान्तप्रमाणः ललाटमात्रे चतुरंगुलेन मीयमानस्य दण्डशब्दवाच्यत्वाभावादेवं व्याख्यायत-पादाग्रादारभ्य यावल्ललाटान्तं प्राप्तः।

एवं विशो वैश्यस्य नासान्तग इति।। ४६।।

**ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।**
**अनुद्वेगरा नृणां सत्वचो नग्निदूषिताः।। ४७।।**

**अन्वय** - ते तु सर्वे ऋजवः अव्रणाः सोम्यदर्शनाः न णाम् अनुद्वेगकरा सत्वचः अनग्निदूषिताः स्युः।

**हिन्दी अर्थ** - वे सब दण्ड सीधे बिना गांठ वाले देखने में प्रिय लगने वाले मनुष्यों को बुरे या डरावने न लगने वाले छालसहित और बिना जले-झुलसे होने चाहियें।। ४७।।

**मेधातिथिः।** ऋजवः अवक्राः। सर्वे इत्यनुवादः। प्रकृतत्वाविशेषात्। अव्रणा अच्छिद्राः। सौम्यं प्रियकरं दर्शनमेषां ते सौम्यदर्शनाः। वर्णपरिशुद्धाः, अकण्टकिताश्च। अनुद्वेगकराः। नैतैः कश्चिदुद्वेजयितव्यः श्वा वा मनुष्यो वा। नृणामिति प्रदर्शनार्थम्। सत्वचः अतष्टाः। अनग्निदूषिताः वैद्युतेन दावोत्थेन वा स्प ष्टाः।। ४७।।

**प्रतिग ह्येप्सितं दण्डमुपस्थाय च भास्करम्।**
**प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधिं।। ४८।।**

**अन्वय** - ईप्सितं दण्डं प्रतिग ह्य भास्करम् च उपस्थाय अग्निं प्रदक्षिणं परीत्य यथाविधिः भैक्षं चरेत्।

**हिन्दी अर्थ** - ऊपर वर्णित दण्डों में अपने योग्य दण्ड धारण करके ओर सूर्य के सामने खड़ा होके यज्ञाग्नि की प्रदक्षिणा करके विधि-अनुसार भिक्षा मांगे।। ४८।।

**मेधातिथिः।** प्राव तेषु चर्मसु मेखलाबन्धनं कर्तव्यम् आबध्य मेखलामुपनयन (उपवीतं) कर्तव्यम्। कृते चोपवीते दण्डग्रहणम्। दण्डं ग हीत्वा भास्कर आदित्य उपस्थेयः। अभिमुखं स्थित्वा दित्यदैवतैर्मन्त्रैरुपस्थानमादित्यस्य कर्तव्यम्। ग ह्यान्मन्त्रावगमः। अन्या चेतिकर्तव्यता तत एव। यत्सर्वसाधारणं तदिहोच्यते। प्रदक्षिणं परीत्य सर्वतो गत्वा ग्निम्। चरेत्कुर्यात्। भैक्षं भिक्षाणां समूहो भैक्षम्। तच्चरेद्याचेत। यथाविधीति वक्ष्यमाणविध्यनुवादः। भिक्षाशब्देन स्वल्पपरिमाणं भक्ताद्युच्यते।। ४८।।

**भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।**
**भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्।। ४६।।**

**अन्वय** - उपनीतः द्विजोत्तमः भवत्पूर्वं भैक्षं चरेत् राजन्यकृतु तु भवन्मध्यं वैश्यस्तु भवदुत्तरम्।

**हिन्दी अर्थ** - यज्ञोपवीत संस्कार में दीक्षित ब्राह्मण 'भवत्' शब्द को वाक्य के पहले जोड़कर, जैसे-'भवान् भिक्षां ददातु' या 'भवती भिक्षां ददातु' कहकर भिक्षा मांगे और क्षत्रिय 'भवत्' शब्द को वाक्य के बीच में लगाकर, जैसे-'भिक्षां भवान् ददातु' या 'भिक्षां भवती ददातु' कहकर भिक्षा माँगे और वैश्य 'भवत्' शब्द को वाक्य के बाद में जोड़कर जैसे-'भिक्षां ददातु भवान्' या 'भिक्षां ददातु भवती' कहकर भिक्षा माँगे।। ४६।।

**मेधातिथिः।** भिक्षाप्रार्थनावाक्यमत्र भैक्षशब्देनोच्यते। तस्य ही भवच्छब्दपूर्वता सम्भवति, न भक्तादेरर्थस्य। स्त्रीणां च प्रथमं भिक्ष्यमाणतयोपदेशात्प्रार्थनायां च प्रार्थ्यमानस्य सम्बोध्यत्वात्सम्बुद्धिविभक्त्यन्तः

स्त्रीलिङ्गो भवच्छब्दः प्रयोक्तव्यः। क्रम एव चात्राद ष्टा र्थो नियम्यते। यथार्थ तु शब्दप्रयोगो 'भवति भिक्षां देहीति'।

"कुतः पुनः संस्कृतशब्दार्थलाभः, यावता स्त्रियः सम्बोध्यन्ते। ताश्च संस्कृतं नावबुद्ध्यन्ते।"

नित्यमुपनयनम्। तस्य च शब्दोच्चारणमङ्गत्वेनोक्तमिति। अनित्याश्चापभ्रंशाः। न तैर्नित्यस्य संयोग उपपद्यते। यथैव च शिष्टा असाधूनुपश्रुत्यैकदेशसाद श्येन साधून्संस्म त्यार्थं प्रतियन्त्यसाधुरन मानेन वाचक इति दर्शनेन गोशब्दो हि साद श्याद्! गोशब्दमनुमापयति। ततो र्थप्रतिपत्तेः, एवं स्त्रियः साद श्यात्साधुभ्यः असाधूनुत्पन्नसम्बन्धान् स्म त्वा तेभ्यो र्थं प्रत्येष्यन्ति। स्वल्पाक्षरं चैतत्पदत्रयं सर्वत्र प्रसिद्धं स्त्रीभिरपि सुज्ञानम्।

एवं भवन्मध्यं क्षत्रियः 'भिक्षां भवति देहीति'। तथा वैश्यो-भवच्छब्द उत्तरमस्येति। भवदुत्तरं वाक्यं समार्थम्।

उपनीत इति भूतप्रत्ययनिर्देशादान्वहिके पि व त्यर्थे भैक्ष्यचरणे यमेव विधिरिति दर्शयति। 'एष प्रोक्तो द्विजातीनामौपनायनिक' इत्यत्रोपनयनप्रकरणमुपसंहरन्नुपयनाङ्गस्यापि भैक्ष्यस्यायमेव विधिरित्याह। अन्यथाकरणादुपनयनाङ्गमेवैतत्स्याद्यदि वा भूतप्रत्ययसामर्थ्यात्प्रकरणं बाधित्वा व त्यर्थ एव भैक्ष्ये। उपनीयमानस्य तदङ्गं यच्चाहरहव त्यर्थं तत्र सर्वत्रायं धर्मः।।४६।।

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।**
**भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत।। ५०।।**

**अन्वय** - मातरं स्वसारं वा मातुः निजां भगिनीं वा या च एनं नावमानयेत प्रथमं भिक्षां भिक्षेत्।

**हिन्दी अर्थ** - माता या बहन से अथवा माता की सगों बहन अर्थात् सगी मौसी से और जो इस भिक्षार्थी का अपमान न करे उसमें पहले भिक्षा मांगे।।५०।।

**मेधातिथिः।** मात्रादयः शब्दाः प्रसिद्धार्थाः। निजा सोदर्या। या चैनं न विमानयेत्। विमानना अवज्ञानम्, 'न दीयत' इति प्रत्याख्यानम्। तथा च ग ह्यम्-, अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वेति'। तदेव हि मुख्यं प्राथम्यं यदुपनीयमानस्य। अहरहस्तु न विमाननाभयमाश्रयणीयम्।। ५०।।

**समाहृत्य तु तद्भैक्षं यावदर्थममायया।**
**निवेद्य गुरवे श्नीयादाचम्य प्राङ्मुखः शुचिः।। ५१।।**

**अन्वय** - तत् भैक्षं तु समाहृत्य यावदन्नम् अमायया गुरवे निवेद्य शुचिः प्राङ्मुखः आचम्य अश्नीयात्।

**हिन्दी अर्थ** - उस भिक्षा को आवश्यकतानुसार लाकर जितनी भी वह सामग्री हो उसे निष्कपट भाव से गुरु को निवेदित करके स्वच्छ होकर पूर्व की ओर मुख करके (आचम्य) आचमन करके खाये।। ५१।।

**मेधातिथिः।** समाहृत्येति शब्दो बह्वीभ्य आहरणं दर्शयति। नैकस्याः सकाशात् बह्व्यो ग्रहीतव्याः।

तदिति यस्यानन्तरं शब्दसन्निधिः व त्यर्थस्य, न प्राकरणिकस्योपनयनाङ्गस्य। तस्य हि ग ह्यकारैः अनुप्रवचनीयं श्रपयेदिति" विहितं, न भोजनम्। 'तिष्ठेदहः-शेषमिति' च कृतप्रातराशस्य चोपनयनम्। अतो नोपनयनाङ्गं भैषभोजनम्।

यावदर्थ यावता भैक्ष्येण त प्त्याख्यप्रयोजननिव त्तिः। न बहु भिक्षितव्यम्।

अमायया निवेद्य गुरवे, न कदन्नेन संस्कृतमन्नं प्रच्छाद्य कदन्नं गुरोः प्रकाशयेत्, कदन्नं किल एष न ग्रहीष्यतीत्यनया बुद्ध्या। निवेदनम् 'इदं प्राप्तमिति' प्रकटीकरणम्। अग हीते गुरुणा अनुज्ञातो अश्नीयात्।

कथं पुनर्निवेदनमद ष्टसंस्कारार्थमेव न भवति ? इतिहासप्रामाण्यात्। तथा च भगवान् व्यासः। स्त्रितकूपाख्याने 'गुरुणा ग हीतमिति' दर्शितवान अनुज्ञातो भु जीतेति यत्क्वचिद्ग ह्ये-धूयते। आचम्य

प्राङ्मुखः। "आचमने प्राङ्मुखतेयमानन्तर्यादिति" केचित् तदयुक्तम्। 'प्रागुदङ्मुख' इत्याचमने दिङ्नियमो भविष्यति। तस्माद्भोजनेनैव सम्बन्धः।

शुचिः। चाण्डालादिदर्शनमशुचि देशाक्रमनिष्ठीवनादि कृताचमनस्य भोजनकाले नेन निषिध्यते।। ५१।।

**आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।**
**श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः।। ५२।।**

**अन्वय** - प्राङ्मुखः आयुष्यं भुङ्क्ते दक्षिणामुखः यशस्यं भुङ्क्ते प्रत्यङ्मुखो श्रियं भुङ्क्ते उदङ्मुखः ऋतं भुङ्क्ते।

**हिन्दी अर्थ** - पूर्व की ओर मुख करके खाने वाला अधिक आयु को भोगता है, दक्षिण की ओर मुख करके खाने वाला अधिक यश को पाता है, पश्चिम की ओर मुख करके खाने वाला धन को भोगताहै और उत्तर की ओर मुख करके खाने वाला सत्य को प्राप्त करता है।। ५२।।

**मेधातिथिः।** निष्कामस्य प्राङ्मुखस्य भोजनं विहितं नित्यतया। इदानीं काम्या विधय उच्यन्ते। आयुषे हितं आयुष्यं प्राङ्मुखो भुङ्क्त इति। यदि तद्भोजनादायुः प्राप्यते तत आयुष्यं तद्भवति, तेनायमर्थः सम्पद्यते 'आयुष्कामः प्राङ्मुखो भु जीत'। अधिकारद्वयं प्राच्यां, नित्यं काम्यं च। आयुष्कामः फलमभिसन्दधीत। इतरस्तु न तथेति। यथा नित्यमग्निहोत्रम्, स्वर्गकामस्य चासकृत्प्रयोगात्तन्त्रेण फलकामस्य नित्यो प्यधिकारो निर्वर्तते।

एवं यशःकामो दक्षिणामुखः। इमे काम्या एव विधयः। श्रियमिच्छन् श्रियन् क्यजन्ताच्छता कृतः। श्रियै हितं वा श्रियमिति मकारान्तः पाठः, आयुष्यादिवत्। प्राण्यङ्गत्वात्स्वार्थे भुजिर्वर्तते। तथा ऋतं भुङ्क्त इति। श्रियं भोजनात्प्राप्नोतीति। तथा च द्वितीयान्तः पाठः श्रियमिति। तादर्थ्ये वा चतुर्थी 'श्रियै प्रत्यगिति'।

ऋतं सत्यं यज्ञश्च, तत्फलं वा स्वर्गः। स्वर्गकाम उदङ्मुखो भु जीत। अन्तरेणापि निधिप्रत्ययमप्राप्तत्वाद्विध्यर्थावगतिः प चमलकारादिकल्पनया। एवमेतद्दिग्विभागेनभोजनं फलविशेषार्थम्। विदिग्भोजनं त्वर्थप्राप्तं नित्येन प्राङ्मुखतानियमेनापोद्यते।

अयं च काम्यो विधिर्न ब्रह्मचारिण एव भैक्ष्यभोजनविषयः, अपि तु ग हस्थादीनामपि भोजनमात्राश्रितः। तथा चाश्नीयादिति प्रकृते भुङ्क्त इत्याख्यातान्तरनिर्देशो लिङ्गम्। इतरथा श्नीयादिति यतो निःसन्दिग्धा प्रकृतविषयता प्रतीयते तदेव निरदैक्ष्यत्। भुङ्क्त इति तु निर्देशे-किं प्रकृत एवार्थः शब्दान्तरेण निर्दिष्ट, उत शब्दार्थतया भोजनमात्रमिति सन्देहे-आख्यातव त्तावर्थान्तरावगतिर्न प्रकृतप्रत्यभिज्ञानमेव।

यत्तु "विधिप्रत्ययाभावादर्थवाद एवायं पूर्वशेष" इति चोक्तः परिहारः 'वचनानि त्वपूर्वत्वादिति'। न च पूर्वेकवाक्यताहेतुर्विभज्यमानसाकाङ्क्षत्वादिरस्ति। यद्यप्युत्तरेषां चैतदवरोधीजत्यनेनातिदेशेन ब्रह्मचारिधर्मो पि पुरुषमात्रविषयः स्यात्फलं तु न स्यात्। गुणकामनायां हि नातिदेशात्प्रव त्तिमन मन्यन्ते। 'गोदोहनेन पशुकामस्य प्रणयेत' 'खादिरं वीर्यकामस्येति' विकृतिषु नेष्यते कैश्चित्।। ५२।।

**उपस्प श्य द्विजो नित्यमन्नमद्यात् समाहितः।**
**भुक्त्वा चोपस्प शेत्सम्यगद्भिः खानि च संस्प शेत्।। ५३।।**

**अन्वय** - द्विजः नित्यं उपस्प श्य समाहितः अन्नम् अद्यात् भुक्त्वा च सम्यक् उपस्प शेत् अद्भिः खानि संस्प शेत्।

**हिन्दी अर्थ** - द्विज प्रतिदिन आचमन करके एकाग्र मन से भोजन खाये और अच्छी प्रकार कुल्ला करे तथा जल से नाक, मुख, नेत्र आदि इन्द्रियों का स्पर्श करे अर्थात् धोये।। ५३।।

**मेधातिथिः।** आचमनोस्प शतिशब्दौ समानार्थौ शुद्ध्यर्थसंस्कारविशेषवचनौ शिष्टव्यवहारादवगम्येते। यद्यपि स्प शतिरर्थान्तरे पठितश्चमुरप्यदनमात्रे, तथापि विशेष एव सोपसर्गयोः प्रयोगदर्शनात्तदर्थतैव प्रतीयते। स्प शेः सामान्यविषयत्वे पि प्रयोगो नियामकः। गडिर्वदनैकदेशे पठ्यते। स च कपोल एव

गण्ड इति प्रयुज्यते, नैकदेशान्तरे। 'पुष्यसिद्ध्यौ (पा० सू० ३।१।११६) नक्षत्रमात्रे पठ्येते, विशेषे च वर्तते। धाय्याशब्दः सामिधेनीमात्रे पठ्यते आवापिकीषु च वर्तते। अतो प एवाचम्येत्यर्थः। एवोपस्प श्येत्यस्यापि। स च परस्ताद्विधायिष्यते। सामानाधिकरण्यं चानयोर्द श्यते नित्यकालमुपस्प शेदित्यभिधाय त्रिराचामेदित्याह। अतः समानार्थः।

उक्ते प्याचम्येति भोजनार्थतया चमने पुनर्वचनमानन्तर्यार्थम्, अनन्तरमेव भु जीत, न व्यापारान्तरेण व्यवदधीत। तथा च भगवान्व्यासः - "प चार्द्रा भु जते नित्यं तेषु वत्स्याम्यहं हरे"।। श्रीः किलैवमाह। द्वौ हस्ती द्वौ च पादावास्यं च एषा प चार्द्रता। सा चोपस्पर्शनानन्तरं भु जानस्य भवति, न विलम्बमानस्य। इहापि वक्ष्य'त्यार्द्रपादस्तु भु जीतेति' स्नातकव्रतेषु। तस्यापौनरुक्त्यं च वक्ष्यामः।

नित्यग्रहणं प्रकरणाद् ब्रह्मचारीभोजनधर्मो मा विज्ञायि, भोजनमात्रधर्मो यथा स्यादुपदेशत एव। अत्र द्विजग्रहणं भोक्त मात्रधर्मार्थं चाहुः नित्यग्रहणं चानुवादम्। न ते शम्यङ्मन्यते। यदि द्विजशब्दः प्रकृते ब्रह्मचारिणि न समाविशेत्तदा स्यादपि यदा तु तस्याप्येतदभिधानं तदा नान्तरेण नित्यग्रहणं प्रकरणबाधो लभ्यते। समाहितः। भुज्यमानं द्रव्यं स्वात्मशक्तिं चावेक्षमाणः। अन्यचेतस्कस्य हि गुरुविरुद्धविदाहिवर्जनं सात्म्यभोजनं च न स्यात्। भुक्त्वा चोपस्प शेत्। स्नेहादिलेपापनयनं द्रव्यशुद्धावुक्तम्। कृते तस्मिन्भुक्तवत इदमाचमनं विधीयते।

अत्र केचिन्मन्यन्ते-"शुद्ध्यर्थमेकमाचमनम्, 'सुप्त्वा क्षुत्वा च भुक्त्वा चेति' अनेनाद ष्टार्थं द्वितीयं कर्तव्यम्। एवं च पठ्यते, "आचान्तः पुनराचमेदिति। एतत्प चमे स्थापयिष्यामः। सम्यगिति वैधतामाचमनपदार्थस्यानुवदति। 'याद शो विधिरुक्तस्तं सर्वमनुतिष्ठेत्'। आद्भिः खानि च संप शेत्। खानि छिद्राणि शीर्षण्यानि।

ननु चैतदुक्तमेव, 'खनि चैव स्प शेदद्भिरिति'। आत्मशिरसो व्याव त्त्यर्थमिति केचित्। यदा शुचिः सप्तभोजनार्थतयैवाचामति। येषां च भोजनोत्तरकालमेकं शुद्ध्यर्थमाचमनमपरमद ष्टार्थं तत्राद ष्टार्थ आत्मशिरसी न स्प श्येते, शुद्ध्यर्थं तु ताद शमुत्पन्नम्। तस्य सम्पूर्णाङ्गस्य प्रयोगो वक्ष्यते (६१ श्लो०) "शौचेप्सुः सर्वदा चामेदिति"। यद्वा विधिप्रत्यभिज्ञानार्थं-शास्त्रीयमेतदाचमनं न लौकिकमिति। ज्ञाताङ्गविशेषसम्बन्धस्य तदङ्गिनिर्देशे तदेवेदमिति प्रत्यभिज्ञानसिद्धिः। अतश्च यत्राचामेदिति श्रुतं तत्र न यस्य कस्यचिद्द्रव्यस्य भक्षणमात्रं प्रतीयते, किं तर्हि शास्त्रीयस्य संस्कारस्य सपरिकरस्येति यदुक्तं तद्दर्शितं भवति।। ५३।।

**पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।**

**द ष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः।। ५४।।**

**अन्वय** - नित्यं अशनं पूजयेत् एतत् च अकुत्सयन् अद्यात् द ष्ट्वा हृष्येत् प्रसीदेत् च सर्वशः च प्रतिनन्देत्।

**हिन्दी अर्थ** - प्रतिदिन खाते हुए भोज्य पदार्थ का आदर करे और इसे निन्दाभाव से रहित होकर अर्थात् श्रद्धापूर्वक खाये भोजन को देख कर मन में उल्लास और प्रसन्नता की भावना करे तथा उसकी सर्वदा प्रशंसा करे।। ५४।।

**मेधातिथिः।** अश्यत इत्यशनं भक्तसक्त्वपूपाद्युच्यते। तदशनार्थमानीतं देवतारूपेण पश्येत्। 'एषा वै परम देवता यदन्नम्'। तस्य सर्वेषां भूतानां स्त्रष्ट्र त्वेन स्थितिहेतुतया च यद्दर्शनं सा स्य 'पूजा'। अथवा प्राणार्थत्वेन भावनम्-'ध्यायन्मम तदर्थत्वं सम्पूजयति मां सदेति'। नमस्कारादिना वा प्रणम्य ग्रहणं पूजा।

अद्याच्चैतदकुत्सयन्। कदन्नतया, दुःसंस्कारोपग्रहणेन वा कुत्साहेतुसम्भवे नान्नं कुत्यसेत्। किमिदमश्यते, अरुचिकरं, धातुवैषम्यजनकमित्येवमादिना भिधानेन नाक्षिपेत्। यदि तु तद्रूपं भवति तदा नाद्यान्न कुत्सयन्नद्यात्।

द ष्ट्वा हृष्येत्। पुत्रस्त्र्यादिसन्दर्शनेन चिरप्रवासप्रत्यागत इव तुष्येत प्रीयेत। प्रसीदेच्च। निमित्तान्तरजमपि कालुष्यमन्नदर्शनेन हित्वा मनःप्रसादमाश्रयेत्। प्रतिनन्देच्च। सम द्ध्यशाशंसनं प्रतिनन्दम्। 'नित्ययुक्ता

एतेन स्याम' इत्यादरोपदर्शनमभिनन्दम्। सर्वशः सर्वदा। 'अन्यतरस्यामिति'। व्यवस्थितविभाषा-विज्ञानात्सप्तम्यर्थे शस् कर्तत्यः। सर्वदेति वा पठितव्यम्।। ५४।।

**पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति।**

**अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम्।। ५५।।**

**अन्वय** - हि अपूजितं अशनम् नित्यं बलं ऊर्ज च यच्छति तत् अपूजितं तु भुक्तम् इदं उभयं नाशयेत्।

**हिन्दी अर्थ** - क्योंकि श्रद्धा-आदरपूर्वक किया हुआ भोजन सदैव बल और स्फूर्ति देने वाला होता है और वह अनादरपूर्वक खाया हुआ इन दोनों, बल और स्फूर्ति को नष्ट करता है।। ५५।।

**मेधातिथिः।** पूर्वविधिशेषो यमर्थवादः, न तु फलविधिः। फलविधौ हि काम्यो यं विधिः स्यादूर्जकामस्य बलकामस्य च। ततश्च नित्यशब्दो नोपपद्येत 'पूजितं ह्यशनं नित्यमिति'। अतो यं यावज्जीविकः प्राङ्मुखतावन्नियमः।

अपूजितं भुक्तं ह्युभयं नाश्येद्बलमूर्जं च। बलं सामर्थ्यमनायासेन भारोद्यमनादिशक्तता। कृशस्याप्यूर्जं महाप्राणता। अङ्गोपचयः महाकायो महाबलश्च भवति।। ५५।।

**नोच्छिष्टं कस्यचिद्दद्यान्नाद्यादेतत्तथान्तरा।**

**न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत्।। ५६।।**

**अन्वय** - कस्यचित् उच्छिष्टं न दद्यात् तथा एव च न अन्तरा अद्यात् न चैव अत्यशनं कुर्यात् उच्छिष्टश्च न क्वचिद् व्रजेत्।

**हिन्दी अर्थ** - न किसी को अपना झूठा पदार्थ दे और उसी प्रकार न किसी भोजन के बीच आप खावे, न अधिक भोजन करे और न भोजन किये पश्चात् हाथ मुख धोये बिना कहीं इध र-उधर जाये।। ५६।।

**मेधातिथिः।** पात्रीस्थमन्नमास्यर्शदूषितमुच्छिष्टमुच्यते। तत्र कस्यचिद्दद्यात् अनेनैव सिद्धे स्नातकव्रतेषु यः शूद्रविषयः प्रतिषेधः स तत्रैव निरूपयिष्यते। चतुर्थ्यां प्राप्तायां षष्ठीसम्बन्धमात्रनिषेधार्था। ये पि दत्तमिदमस्मभ्यमिति न निदुस्तेषामपि भोजनाय न प्रकल्प्यं श्वबिडालादीनाम्। न ह्यत्र ददात्यर्थः परिपूर्णः स्वत्वनिव त्तिमात्रं दातुः, परस्य सत्वापत्तिर्नास्ति।

अन्तराशब्दो मध्यवचनः। द्वौ भोजनकालौ सायं प्रातश्च। ततो न्यस्मिन्काले न भु जीत। अथवा व्यवधाने अन्तराशब्दः। त्यक्तभोजनव्यापारः क्रियान्तरेण व्यवधाय पुनस्तदेव प्राक्पात्रग हीतं न भु जीत। स्म त्यन्तरे तु विशेषः पठ्यते 'उत्थानाचमनव्यापेतमिति'। केचित्तु विच्छेदमन्तरमाचक्षते। 'सव्येन पाणिना पात्रमन्वालभ्य दक्षिणेनावदाय प्राणयास्ते जुहीतीति' श्रूयते। तत्र यः सव्येन पात्रस्यानुग्रहस्तदनन्तरम्।

न चैवात्यशनमतिमात्रमशनं कुर्यात्। एतच्चानारोग्यकारणं गुरुविरुद्धादीना प्रदर्शनार्थम्। हेतूपदेशान्मात्राशितायाश्चायुर्वेदादतिमात्रता बोद्धव्या, यावदशितमन्नमुदरपूरं न करोति सम्यग्जीर्यति तावदशितव्यम्। त्रयः कुक्षेर्भागाः, अध्यर्धमन्नस्य, भागार्धं पानस्य, भागो दोष (वायु) स चाराय। अन्यथा नारोग्यम्।

न चोच्छिष्टः क्वचिद् व्रजेत्। अतश्चोच्छिष्टमपनीय शुचित्वमापादिते तस्मिन्नेव देश आचान्तव्यम्।। ५६।।

**अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्।**

**अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत्।। ५७।।**

**अन्वय** - अतिभोजनम् अनारोग्यम् अनायुष्यमस्वर्ग्यम् अपुण्यं लोकविद्विष्टं च तस्मात् तत् परिवर्जयेत्।

**हिन्दी अर्थ** - अधिक भोजन करना स्वास्थ्यनाशक, आयुनाशक, सुखनाशक अहितकर और लोगों द्वारा निन्दित माना गया है इसलिए उस अधिक भोजन करने को छोड़ देवे।। ५७।।

**मेधातिथिः।** द ष्टमूलतामत्यशनप्रतिषेधस्याचष्टे। अनारोग्यं व्याध्युत्पत्तिर्ज्वरोदरादिपीडा। विषूचिकादिना जीवितनाश अनायुष्यम्। सर्वत एवात्मानं गोपायेदिति शरीरपरिरक्षादिव्यतिक्रमादस्वर्ग्यम्। नरकप्राप्तिः स्वर्गाभावेन प्रतिपद्यते। अपुण्यं दौर्भाग्यकरम्। लोकविद्विष्टं बहुभोजितया निन्द्यते। तस्मात्कारणादत्यशनं परिवर्जयेन्न कुर्यात्।। ५७।

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्प शेत्।**
**कायत्रैदशिकाभ्यां वा, न पित्र्येण कदाचन।। ५८।।**

**अन्वय** - विप्रः नित्यकालम् ब्राह्मेण तीर्थेन कायत्रैदशिकाभ्यां वा उपस्प शेन्, पित्र्येण कदाचन न।

**हिन्दी अर्थ** - द्विज प्रतिदिन आचमन करते समय ब्राह्मतीर्थ (हाथ के अंगूठे के मूलभाग का स्थान, जिससे कलाई भाग की ओर से आचमन ग्रहण किया जाता है) से अथवा कायतीर्थ=प्राजापत्य (कनिष्ठा अंगुली के मूलभाग के पास का स्थान) से या त्रैदेशिक=देवतीर्थ (अंगुलियों के अग्रभाग का स्थान) से आचमन करे, पित तीर्थ (अंगूठे तथा तर्जनी के मध्य का स्थान) से कभी आचमन न करे।। ५६।।

**मेधातिथिः।** तीर्थशब्देन पवित्रमुदकाधिकरणमुच्यते। तारणाय पापप्रमोचनाय च तिष्ठतीति क्वचित्तु तरन्त्यनेनेति तीर्थमुदकावतरणमार्गः। इह तूदकाधारकरतलैकदेश उच्यते। स्तुत्या च तीर्थशब्दप्रयोगः। न हि तत्र नित्यस्था आपः। तेन उपस्प शेदाचामेत्।

ब्राह्मणेत्येतदपि स्तुत्यर्थमेव। ब्रह्मा देवता स्येति। न हि तीर्थस्य देवता भवत्ययागरूपत्वादमन्त्रत्वाच्च। यागरूपतां च केनचिद्धर्मेण शुद्धिहेतुत्वादिना ध्यारोप्य देवतातद्धितः। नित्यकालं शौचार्थे कर्माङ्गे च। कः प्रजापतिः, स देवता स्येति 'कायम्'। एवं त्रिदशा देवता अस्येति 'त्रैदशिकम्'। त्रिदशशब्दाद्देवता णिकृते स्वार्थे 'कः'। देवतात्वं च पूर्ववत्। एभिस्तीर्थैरुपस्प शेत्। विप्रग्रहणमविवक्षितम्। यतः क्षत्रियादीनां विशेषं वक्ष्यति। न चासत्यां सामान्यतः प्राप्तौ विशेषविधानमुपपद्यते, 'कण्ठागाभिस्तु भूमिप' इत्यादि।

न पित्र्येण पित दैवत्येन कदाचिदपि। स्फोटपिटकादिना ब्राह्मादितीर्थेष्वयोग्यतामायातेष्वपि।

"ननु चाविधानादेव पित्र्यस्याप्राप्तिः" अस्त्यत्राशङ्का। पित तीर्थज्ञापनार्थं तावत्पित्र्यं तयोरध इत्यवश्यं वक्तव्यम्। न च तस्येह कार्यं निर्दिश्यते। कार्याकाङ्क्षायाम् प्रकृतत्वात्तेन कार्येण सम्बन्ध आशङ्क्येत। अद्य पुनः प्रतिषेधे सति 'पित्र्य'मिति समाख्ययैव कार्यावगतिः, उदकतर्पणादि पित कर्म एतेन तीर्थेन कर्तव्यम्। एवं स्तुतिरन्वयिनी भवति। श्रुतिचोदितत्वाच्च ब्राह्मादीनां, तदभावे प्राप्ताशंकानिव त्यर्थं युक्तमस्याभिधानम्।। ५८।।

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते।**
**कायमङ्गुलिमूले ग्रे दैवं पित्र्यं तयोरधः।। ५६।।**

**अन्वय** - अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते अङ्गुलिमूले कायम् अग्रे दैवम् तयोः अधः पित्र्यम् प्रचक्षते।

**हिन्दी अर्थ** - अंगूठे के मूलभाग के नीचे का स्थान ब्राह्मतीर्थ अंगुलियों के मूलभाग का स्थान कायतीर्थ अंगुलियों के अग्रभाग का स्थान देवतीर्थ और अंगुलियों और अंगूठे का मध्यवर्ती मूल भाग का स्थान पित तीर्थ कहा जाता है।। ५६।।

**मेधातिथिः।** अङ्गुष्ठस्य मूलमधोभागः। तस्य तलप्रदेशो ब्राह्मं तीर्थम्। हस्ताभ्यन्तरं तलमाह। महारेखान्तमभिमुखमात्मनो ब्राह्मं हस्तमध्ये। अङ्गुलीनां मूले दण्डरेखाया ऊर्ध्वं 'कायम्'। अग्रे अङ्गुलीनां 'दैवम्'। एवमुपसर्जनीभूतो पि मूले अङ्गुलिशब्दः सापेक्षत्वादग्रशब्दे सम्बध्यते। पित्र्यं तयोरधः। अत्रापि गुणीभूतस्याङ्गुलिशब्दस्याङ्गुष्ठस्य च सम्बन्धः। प्रदेशिनी चात्राङ्गुलिर्विवक्षिता।

तयोरध अन्तरं 'पित्र्यम्'।

स्म त्यन्तरशिष्टप्रसिद्धिसामर्थ्यादेवं व्याख्यायते। यथाश्रुतान्वयासम्भवात्। तथा च शङ्खः- "अङ्गुष्ठस्याधरधः प्रागग्रायाश्च रेखाया 'ब्राह्मं' तीर्थं, प्रदेशिन्यङ्गुष्ठयोरन्तरा 'पित्र्यं' कनिष्ठातलयोः पूर्वेण पर्वणा 'कायं' अग्रमङ्गुलीनां दैविकमिति"।। ५६।।

**त्रिराचामेदपः पूर्वं द्विः प्रम ज्यात्ततो मुखम्।**

**खानि चैव स्प शेदद्भिरात्मानं शिर एव च।। ६०।।**

**अन्वय** - पूर्वं अपः त्रिः आचमेत् ततः मुखं द्वि प्रम ज्यात् खानि च शिरश्चैव अद्भिः स्प शेत्।

**हिन्दी अर्थ** - पहले जल का तीन बार आचमन करे उसके बाद मुख को दो बार धोये और नाक, कान, नेत्र आदि इन्द्रियों को हृदय ओर सिर को भी जल से स्पर्श करे।। ६०।।

**मेधातिथिः।** अन्यतमेन तीर्थेन त्रिरप उदकमाचामेदास्येन जठरं प्रवेशयत्।

तत उदकभक्षणादनन्तरं द्विरभ्यासेन मुखम् ओष्ठद्वयं परिम ज्यात् ओष्ठश्लिष्टानामुदकावयवानां सोदकेन हस्तेनापनयनं 'प्रमार्जन'मत्र। "कुतः पुनर्हस्तेनेति।" समाचारात्तीर्थाधिकाराद्वा। 'तीर्थेनैवाद्भिरि'ति चोत्तरत्र श्रुतमत्राप्यकृष्यते। द ष्टार्थत्वाच्च प्रमार्जनस्य मुखशब्द एकदेशे यथोक्ते वर्तते।

खानि छिद्राणि चोपस्प शेदद्भिर्हस्तग हीताभिः स्पर्शनमेवोपस्पर्शनम्। मुखस्य च प्रकृतत्वान्मुख्यानामेव खानामेष स्पर्शनविधिः। गौतमश्चाह "खानि चोपस्प शेच्छीर्षण्यानि।" आत्मानमिति हृदयं नाभिं वा निर्दिशति। उपनिषत्सु हि "अन्तर्हृदयमात्मानं पश्येदिति" कथ्यते। अतो हृदयस्यायं स्पर्शः क्षेत्रज्ञस्यात्मनो विभोः। अमूर्तस्य न स्पर्शसम्भवः। 'नाभिमालभेतेति' क्वचित्स्मर्यते; तेन नाभि मन्यामहे। शिरः प्रसिद्धम्।

स्म तीनां चौकार्थ्या'दामणिबन्धात्पाणी प्रक्षाल्ये'त्येवमादि लभ्यते। तथा अशब्दकरणं वाङ्नियमः पादाभ्युक्षणम्। महाभारते प्रक्षालनमपि पादयोर्दर्शितम्।। ६०।

**अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित्।**

**शौचेप्सुः सर्वदा चमेदेकान्ते प्रागुदङ्मुखः।। ६१।।**

**अन्वय** - शौचेप्सुः धर्मवित् अनुष्णाभिः अफेनाभि अद्भिः एकान्ते प्रागुदङ्मुखः सर्वदा तीर्थेन आचमेत्।

**हिन्दी अर्थ** - पवित्रता का इच्छुक धर्मात्मा व्यक्ति ठंडे, झागरहित जल से एकान्त स्थान में पूर्व या उत्तर की ओर मुख करके सदैव तीर्थस्थान से ही आचमन करे।। ६१।।

**मेधातिथिः।** उष्णशब्दः क्वाथोपलक्षणार्थः। तथा हि पठ्यते 'अश्र ताभिरद्भिरिति'। एवं च ग्रीष्मोष्मतप्ताः स्वभावोष्णाश्च न प्रतिषिध्यन्ते। फेनग्रहणं बुद्बुदानामपि प्रदर्शनार्थम्। पठितं च 'हीनाभिः फेनबुद्बुदैरिति'।

तीर्थेन धर्मविदिति व त्तपूरणमेव। शौचमाप्तुमिच्छुः शौचेप्सुः। शुद्धिकाम इत्यर्थः। नान्यथा शुद्धो भवति। सर्वदा। न प्रकरणाद्भोजन एव, किं तर्हि ? रेतोविण्मूत्रादिशुद्धिष्वपि। अपां भक्षणे कर्मत्वात्त तीयानिर्देशो न भक्ष्यमाणानामेवायं धर्मो पि तु कारणभूतानामपि पादाभ्युक्षणादौ। वयं तु ब्रूमो भक्षणे पि कारणमेवापो, न हिं तासामाचमनं संस्कारः।

एकान्ते शुचौ देशे। एकान्तो हि जनैरनाकीर्णः प्रायेण शूचिर्भवति।

प्रागुदङ्मुखः। मुखशब्दः प्रत्येकमभिसम्बध्यते। "प्राङ्मुख उदङ्मुखो वा" एवं हि गौतमेन पठितम्। विग्रहश्चैवं कर्तव्यः प्रागुदङ्मुखमस्येति। नायं द्वन्द्वगर्भो बहुव्रीहिरपि तु बहुव्रीहिरेव। द्वन्द्वगर्भतायां-समाहारे समासान्तेनाकारेण भवितव्यम्। इतरेतरयोगो पि नैव। न हि युगपदुभयदिङ्मुखता सम्भवति। तत्र कश्चिदाचमनभागः प्राङ्मुखेन कर्तव्यः कश्चिदुदङ्मुखेनेत्यापतति, न चैकदेशे आचमनम्। न च दिगर्थ उपादेयो येन परस्परापेक्षे सम्बन्ध्येयाताम्। नापि दक्षिणपूर्वादिवत्प्रागुदक्शब्दो पराजिताया दिशो वाचकत्वेन प्रसिद्धो येन दिक्समासबहुव्रीहिजिर्ज्ञायेत। तस्मान्नायं व त्यन्तरगर्भो बहुव्रीहिः।

अतो विकल्पः। उदाहृतं च स्म त्यन्तरे "प्राङ्मुख उदङ्मुखो वा शौचमारभेतिति"। यथा "ब हद्रथन्तरसाम षडह" इति केषुचिदहःसु ब हत् केषुचिद्रथन्तरम्; न त्वेकस्मिन्नहनि समस्तोभयसामत्वम्।। ६१।।

**हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।**

**वैश्यो दि्भ प्राशिताभिस्तु शूद्रः स्प ष्टाभिरन्ततः।। ६२।।**

**अन्वय** - विप्रः हृद्गाभिः भूमिपः कण्ठगाभिः वैश्यः प्राशिताभिः शूद्रः अन्ततः स्प ष्टाभिः अद्भिः पूयते।

**हिन्दी अर्थ** - ब्राह्मण हृदय तक गए हुए क्षत्रिय कण्ठ तक गए हुए, वैश्य मुख में गए हुए, शूद्र ओठों से स्पर्श किए हुए आचमन के जल से पवित्र होता है।। ६२।।

**मेधातिथिः।** उक्तमाचमनं तीर्थेनापां भक्षणम्। परिणामं तु नोक्तमतस्तदवधारणार्थमाह-

हृदयं गच्छन्ति प्राप्नुवन्ति 'हृद्गाः'। 'अन्येष्वपि द श्यत' (पा० सू० ६।२।१०१) इति गमेर्डः। 'हृदयस्य हृदिति' (पा० सू० ६।३।५०) योगविभागाद्ध दादेशः।

पूयते पवित्रतां प्राप्नोत्यशुचित्वं व्यावर्तते। आप ईषदूनचुलुकमात्रप्रमाणाः।

कण्ठागाभिसताभिः कण्ठमात्रव्यापिनीभिः भूमिपः क्षत्रियः। भूमेराधिपत्यं क्षत्रियस्य विहितम्। तेन प्रसिद्धेन कर्मणा क्षत्रियजातिर्लक्ष्यते। आधिपत्यविवक्षायां राजधर्मेष्वेवावक्ष्यत्। वैश्यः प्राशिताभिरन्तरास्यप्रवेशिताभिः। कण्ठमप्राप्ता अपि शुद्धिहेतवो वैश्यस्य।

शूद्रः स्प ष्टाभिरन्तत अन्तेनेति। आद्यादित्वात्त तीयार्थे तसिः। अन्तशब्दो यं समीपवचनो स्ति। 'उदकान्तं गत' उदकसमीपमिति गम्यते। अस्त्यवयववचनः। 'वस्त्रान्तो' 'वसनान्त' इत्युभयत्रापि वर्तमानः सम्बन्ध्यन्तरमपेक्षयते, कस्य समीपं कस्य वा वयव इति। तत्रेह येन स्थानेन वर्णान्तराणामाचमनं विहितम्, तीर्थेर्जिह्वौष्ठेन च तदन्तेनेति प्रतीयते। समीपवचनस्तु न सम्भाव्यः विधीयमानस्याचमनस्य तत्साध्यत्वासम्भवात्। स्पर्शे पि प्राशनमस्ति।

जिह्वौष्ठेन हि स्प श्यमानस्य रसास्वादनमवश्यम्भावि। तत्र वैश्यपरिमाणात्कि चिन्न्यूनता त्र विवक्षिता। जिह्वामूलं यावद्वैश्यस्य; जिह्वाग्रं शूद्रस्य। द्रवत्वादुदकस्यापरिहार्यो वध्यतिक्रमः, अवध्यप्राप्तौ त्वशुद्धिः।

सर्वश्चायं तीर्थविभागो दक्षिणहस्तस्य उपस्पर्शने हस्तस्यौचित्याद्दक्षिणाचारतायाश्च पुरुषधर्मतया विहितत्वात्। एवमर्थमेव चास्मिन्नवधाविदमुच्यते।। ६२।।

**उद्ध ते दक्षिणे पाणावुपवीत्युच्यते द्विजः।**

**सव्ये प्राचीन आवीति निवीती कण्ठसज्जने।। ६३।।**

**अन्वय** - द्विजः दक्षिणे पाणौ उद्ध ते उपवीत् सव्ये प्राचीन आवीति कण्ठसज्जने निवीती उच्यते।

**हिन्दी अर्थ** - द्विज द्वारा दाहिने हाथ को ऊपर रखने की अवस्था में अर्थात्! यज्ञोपवीत को दायें हाथ और कन्धे के नीचे लटका कर तथा बायें कन्धे के ऊपर रखकर पहनने की अवस्था में 'प्राचीन आवीति' और गले में माला के समान पहनने की अवस्था में 'निवीती' कहलाता है।। ६३।।

**मेधातिथिः।** "ननु च लोकतः सिद्धाः पदार्था धर्मशास्त्रे प्याश्रीयन्ते। न पदार्थसंविज्ञानार्थानि मन्वादिवाक्यानि, व्याकरणाभिधानकाण्डस्म तिवत्"। उक्तमस्माभिर्यो नातिप्रसिद्धो र्थस्तं चेल्लक्षयन्ति किमुपालम्भमर्हन्ति। अस्ति चात्र कि चित्प्रयोजनमन्यदपि। आचमनक्रममुच्यमानमुपसंव्याना-दिकमाचमनाङ्गं यथा विज्ञायेत। यद्यप्युपवीतधारणं व्रतार्थतया पुरुषार्थतया वा सर्वदा प्राप्तं तथापि तेन विना चमनं कृतमप्यपरिपूर्णमेव स्यात्। असत्यस्मिन्वचने व्रते वैगुण्यं पुरुषदोषश्च स्यात्। अथ पुनरन्तरेणोपवीतमाचमनं कृतमप्यकृतसमं, दोषश्च स्यादप्यशुचिना कृतमपां भक्षणमिति।

"कथं पुनः केवलस्योपवीतस्यैवाचमनाङ्गता यावता न्यदप्यत्र निर्दिष्टं प्राचीनावीति च।" उच्यते।

प्राचीनावीतं स्वशब्देनैव पित्र्ये कर्मणि विहितं, तत्रार्थवत्तायामुपयातायां नाकृतार्थेनोपवीतेन विकल्पितुमर्हति। निवीतमप्युभिचारे र्थवत्। यद्यप्यत्र निवीतस्य विनियोगो नास्ति, तथापि स्म तीनां चैकार्थ्यादन्यत्र यो विनियोगस्तेनेहाप्यर्थवत्ता भवत्येव। पाणिग्रहणं बाहूपलक्षणार्थमुद्ध तबाहुर्यतो लोक उपवीतीत्युच्यते। सार्वकालिकं चोपवीतं वक्ष्यामः। न च केवलपाणावुद्ध त उपवीती।

सव्ये उद्ध ते प्राचीनावीती। समासपदान्नामधेयम्। असमासस्तु व त्तानुरोधितया। कण्ठसज्जने। कण्ठे सज्जनं सङ्गः स्थापनम्। यदा वस्त्रस्य सूत्रस्य नान्यतरो पि बाहुरुद्ध्रियते तदा निवीती भवति।। ६३।।

**मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।**
**अप्सु प्रास्य विनष्टानि ग ह्णीतान्यानि मन्त्रवत्।। ६४।।**

**अन्वय** - मेखलामजिनं दण्डं उपवीतं कमण्डलुम् विनष्टानि अप्सु प्रास्य अन्यानि मन्त्रवत् ग ह्णीत्।

**हिन्दी अर्थ** - मेखला, म गचर्म, दण्ड, यज्ञोपवीत, कमण्डलु इनके बेकार होने पर इन्हें बहते जल में फेंककर दूसरे नयों को मन्त्रपूर्वक धारण करे।। ६४।।

**मेधातिथिः।** विनष्टानामप्सु प्रासनमन्येषां च ग्रहणमत्र विधीयते। प्रासनग्रहणयोः पौवापर्यं यथाश्रुतमेव। अस्माच्च पुनरुपादानान्नैषामुपनयनाङ्गतैव।

"अथ किमुपनयनकाल एव प्राक्कर्मनिष्पत्तेः दैवान्मानुषाद्वा प्रतिबलाद्विनष्टानां प्रतिपत्तिर्न सम्भवति। प्रयोगसमाप्त्यर्थं च पुनरुपादानं, यथा कपालस्य; येनैवमुच्यते अस्मात् पुनरुपादानाद्धारणमनुमीयते।"

उच्यते। ग्रहणं तावद्दण्डस्य चोदितं, मेखलाया बन्धनम्। तत्र सूत्रस्य विन्यासस्तावदुपनयनाङ्त्वेनावश्यं कर्तव्यम्। कृते तस्मिन्कृतः शास्त्रार्थः। उत्तरकालं किं तैर्नष्टैरनष्टैर्वा। अङ्गनाशे च प्रतिपत्तिविशेषः कर्मोपकारको भवति। न च तेषां कि चन कार्यमाम्नातं येन तत्सिद्ध्यर्थं विशिष्टे काले वाचनिकमुपादानम्। अकृतत्वाच्च कार्यस्य तत्प्रयुक्तं पुनरुपादानमर्थसिद्धमुच्यते। तस्मात्प्रतिपत्तिविधानादुपादानवचनाच्च धारणमङ्गं, न च प्रयोगापवर्गि। यतः कमण्डलुनोपनयनोत्तरकालानुवर्तिना तुल्यवन्निर्देशात्तेषामप्युत्तरत्रानुव त्तिः प्रतीयते। सा च व्रताङ्गम्। अत उभयार्था मेखलादयः प्रकरणादुपनयनार्थाः। निव त्ते चोपनयने दर्शनाद्यावद्ब्रह्मचर्यभाविनः। कमण्डलुश्चोदकार्थः कर्तव्यो स्मादेव प्रतिपत्तिविधानात्। अन्यथा यदा कमण्डलुस्तदेयं प्रतिपत्तिरिति पाक्षिकत्वं स्यात्। तत्र 'दण्डधारणं प्रतिग ह्य दण्डं भिक्षां चरे'दिति क्रमाद्भैक्ष्यचर्याङ्त्वमेव प्राप्तं समाचारादभैक्षे र्थे पि भ्रमणं भवत्येव। न तु सर्वदैव करतलध तदण्डस्य स्थानासनशयनभोजनादीनि। तथा च स्वाध्याये ब्रह्मा जलिं वक्ष्यति।

मन्त्रवदित्युपनयनविधिना ग्रहणमनुवदति। तत्र च मेखलाया मन्त्रो, न दण्डस्य।। ६४।।

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः।। ६५।।**

**अन्वय** - ब्राह्मणस्य षोडशे राजन्यबन्धोः द्वाविंशे वैश्यस्य तत् द्वयधिके केशान्तः विधीयते।

**हिन्दी अर्थ** - ब्राह्मण के सोलहवें, क्षत्रिय के बाईसवें, वैश्य के उससे दो वर्ष अधिक अर्थात् चौबीसवें वर्ष में केशान्त कर्म =क्षोर मुंडन हो जाना चाहिये।

**मेधातिथिः।** केशान्तो नाम संस्कारः। स गर्भषोडशे वर्षे ब्राह्मणस्य कर्तव्यः। तस्य च स्वरूपपरिज्ञाने ग ह्यमेव शरणम्। द्वे वर्षे धिके यस्य द्वाविंशस्य तस्मिन्द्व्यधिके द्वाविंशे। अथवा कालमात्रमन्यपदार्थः। ततो द्वाविंशाद्वर्षाद्द्व्यधिके काले वैश्यस्येति। द्विशब्दस्य च वर्षाण्येव सङ्ख्येयानि। प्रकृतानि हि तानि।। ६५।।

**अमन्त्रिका तु कार्येयं स्त्रीणामाव दशेषतः।**
**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।। ६६।।**

**अन्वय** - स्त्रीणां इयम् आव त् शरीरस्य संस्कारार्थं यथाकालं यथाक्रमम् अशेषतः अमन्त्रिका कार्या।

**हिन्दी अर्थ** - स्त्रियों की यह संस्कार की क्रिया शरीर की पवित्रता के लिए यथासमय और उपयुक्त क्रमानुसार पूर्णतः मन्त्ररहित करनी चाहिये।। ६६।।

**मेधातिथिः।** इयमाव दशेषतः स्त्रीणाममन्त्रिका कार्या। जातकर्मण आरभ्येयं संस्काराणाम् आव त् परिपाटी, सेतिकर्तव्यताकः संस्कारकलाप इति यावत्। संस्कारार्थं शुद्ध्यर्थं शरीरस्य। पुंसामिव स्त्रीणामपि प्रयोजनमाह यथाकालम्। यस्मिन्काले यः संस्कार उक्तस्तं कालमनतिक्रम्य। पदार्थानतिव त्तौ 'यथासाद श्ये' (पा० २।१।७) अव्ययीभावः। एवं क्रमे पि द्रष्टव्यम्।

मन्त्रमात्ररहिताया आव तो विहितत्वादयथाकालक्रमप्राप्तिरेव नास्ति। अतो निषेधे नित्यानुवादो व त्तपूरणार्थः। एतावद्विवक्षितं स्त्रीणां चैते अमन्त्रका इति।। ६६।।

**वैवाहिको विधि स्त्रीणां संस्कारो वैदिकः स्म तः।**

**पतिसेवा गुरौ वासो, ग हार्थो ग्निपरिक्रिया।। ६७।।**

**अन्वय** - स्त्रीणां वैवाहिकः विधिः वैदिकः संस्कारः स्म तः पतिसेवा गुरौ वासः ग हार्थो अग्निपरिक्रिया (स्म ताः)।

**हिन्दी अर्थ** - स्त्रियों का विवाह संस्कार उसका वेदोक्त संस्कार कहा है अर्थात् उनके लिए प थक् से उपनयन संस्कार की आवश्यकता नहीं। पति की सेवा करना गुरुकुल वास है। घर के काम ही अग्निहोत्रादि धार्मिक क्रियायें हैं अर्थात् प थक् से उनके लिए गुरुकुल-निवास और यज्ञादि की आवश्यकता नहीं।।६७।।

**मेधातिथिः।** पूर्वेणाव द्वचनेन जातकर्मादिवदुपनयने प्यमन्त्रके प्राप्ते तन्निव त्त्यर्थमारभ्यते। वेदग्रहणार्थो वैदिकः संस्कार उपनयनाख्यो यः स स्त्रीणा वैवाहिको विधिः। विवाहे भवो विवाहविषयो विवाहसाध्यः। अतो विवाहस्योपनयनस्थाने विहितत्वात्तदापत्तिवचनं विवाहस्य। तस्य च निव त्तिर्यदि विवाहस्तत्कार्यकरः।

हन्तः प्राप्तं वेदाध्ययनं, प्राप्ता च व्रतचर्या। उपनयनं नाम मा भूत्। एतदुभयमपि निर्वतयति पतिसेवा गुरौ वासः। पति यत्सेवत उपचरत्याराधयति स एवास्या गुरौ वसतिः। गुरौ वसत्या ध्ययनं कर्तव्यम्। न चास्या गुरौ वासो स्त्यतः कुतो ध्ययनम्। ग हार्थो ग हकृत्यानि रन्धनपारिणाह्यप्रत्यवेक्षणादीनि यानि नवमे वक्ष्यन्ते (श्लो० ११ "अर्थस्य संग्रहे चैनाम्" इत्यादि। सायम्प्रातर्ब्रह्मचारिणो यत्समिदाधानं तदेवास्या ग हकृत्यम्। अग्निक्रियया च यावान्यमनियमसमूहो ब्रह्मचारिणः स सर्व उपलक्ष्यते।

एवं चैतदुक्तं विवाहस्योपनयनापत्त्य (र्थ) म्। यथैव पुरुषस्योपनयनात्प्रभ ति श्रोताः स्मार्ता आचारप्राप्ताशश्च विधयो भवन्ति, प्राक्तनं कामचारः कर्माक्षमत्वमेवं स्त्रीणां प्राग्विवाहात्कामचारः, परस्मात् श्रौतस्मार्तेष्वधिकारः।

एवं वा पदयोजना। विवाह एव स्त्रीणां वैदिकः संस्कार उपनयनम्। अनुपनयने पि विवाहे भक्त्योपनयनत्वमुच्यते। किं तदुपनयनेन विवाहस्य साम्यं येनास्य तद्व्यपदेश अत आह पतिसेवेत्यादि।। ६७।।

**एष प्रोक्तो द्विजातीनामौपनायनिको विधिः।**

**उत्पत्तिव्य जकः पुण्यः, कर्मयोगं निबोधत।। ६८।।**

**अन्वय** - एष द्विजातीनाम् उत्पत्तिव्य जकः पुण्यः औपनायनिकः विधिः प्रोक्तः कर्मयोगं निबोधत।

**हिन्दी अर्थ** - यह द्विजातियों के द्वितीय जन्म को प्रकट करने वाली अर्थात् मनुष्यों को द्विज-ब्राह्मण, क्षत्रिय और वैश्य बनाने वाली कल्याणकारक उपनयन संस्कार विधि कही, अब उपनयन में दीक्षित होने वाले द्विज ब्रह्मचारियों के कर्त्तव्यों को सुनो।। ६८।।

**मेधातिथिः।** प्रकरणोपसंहारः-

एतावदुपनयनप्रकरणम्। अत्र यदुक्ते तत्सर्वमुपनयनार्थम्। "ननु केशान्तो प्येवं प्राप्नोति"। न। अतिव त्ते उपनयने स्वकाले तस्य विधानात्। प्रकरणे पि पठितस्य वाक्यादन्यार्थता भवति। तथा च केशान्तः समाव त्तस्यापि कैश्चिदिष्यते।

उपनयने भव औपनायनिकः। उत्तरपदस्य दीर्घत्वम् पूर्ववत्। उत्पत्तिः मातापित्रोः सकाशाज्जन्म तां व्यनक्ति प्रकाशयति सगुणतां करोतीत्युत्पत्तिव्य जकः। जातो प्यजातसमो नुपनीतो धिकाराभावात्। अतो यं विधिरुत्पत्तिव्य जकः। पुण्य इत्युक्तार्थः। उनपनीतस्य येन कर्मणा योगः सम्बन्धो धिकारो, यत्तेनोपनीतेन कर्तव्यं, तदिनार्नी वक्ष्यमाणं निबोधत।। ६८।।

**उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।**
**आचारमग्निकार्यं च सन्ध्योपासनमेव च।। ६६।।**

**अन्वय** - गुरुः शिष्यम् उपनीय आदितः आचारम् अग्निकार्यम् सन्ध्योपासनमेव शिक्ष्ज्ञमेत्।

**हिन्दी अर्थ** - गुरु शिष्य का यज्ञोपवीत संस्कार करके पहले शुद्धि=स्वच्छता से रहने की विधि सदाचरण और सद्व्यवहार अग्निहोत्र की विधि और सन्ध्या-उपासना की विधि सिखाये।। ६६।।

**मेधातिथिः।** शिक्षयेद्व्युत्पादयेच्छौचमादितः। आदित इति वचनेनाचारादिभ्यः प्रागुपदेशः शौचस्य नेष्यते, किं तर्ह्यनियतक्रमकाः परस्परमेते। केवलमुपनयनानन्तरं व्रतादेशनं वक्ष्यति। आदिष्टवेदव्रतस्य च वेदाध्ययनम्। अतो ग्नीन्धनसन्ध्योपासनयोः समन्त्रकत्वादकृते च वेदाध्ययनम्। अतो ग्नीन्धनसन्ध्योपासनयोः समन्त्रकत्वादकृते व्रतादेशे मन्त्रोच्चारणमप्राप्तं विधीयेत। शौचं चानियतकालं, तदवश्यं तदहरेवोपदेष्टव्यम्। एवमाचारो पि। अत इदमादित इति वचनमादरार्थं न प्रथमोपदेश्यतां शौचस्य विधत्ते। शौचम्-'एका लिङ्गे' (अ० ५ श्लो० १३६) इत्याद्याचमनान्तम्।

आचारो गुर्वादीनां प्रत्युत्थानासनदानाभिवादनादि। अग्निकार्यं अग्न्याधनकार्यं समित्समिन्धनम्।

सन्ध्यायामादित्यस्योपासनं तत्स्वरूपभावनं सन्ध्याया उपासनम्। एवं वा 'पूर्वां सन्ध्यामित्यादि' (अग्रे १०१ श्लो०)। एष व्रतधर्मः।।६६।।

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रममुदङ्मुखः।**
**ब्रह्मा जलिकृतो ध्याप्यो लघुवासा जितेन्द्रियः।। ७०।।**

**अन्वय** - अध्येष्यमाणः यथाशास्त्रम् आचान्तः उदुङ्मुखः ब्रह्मा जलिः कृतः लघुवासा जितेन्द्रियः अध्याप्यः।

**हिन्दी अर्थ** - पढ़ने की इच्छा वाला जब शास्त्रोक्त विधि से आचमन कर ले, उत्तर की ओर मुख किये हो, ब्रह्मा जलि (दोनों हाथों को जोड़े हुए) बांधे हो, हलके वस्त्र धारण किये हुए और एकाग्रचित्त हो तब पढ़ाने योग्य होता है अथवा तब पढ़ाना चाहिए।। ७०।।

**मेधातिथिः।** अध्ययनधर्मानिदानीमाह-

प्रत्यासन्ने भविष्यति ल डयं द्रष्टव्यः। अध्ययने प्रवर्तमानः अध्ययनमारभमाणः अध्येतुमिच्छन्निति यावत्।

उदङ्मुखो ध्यायः। गौतमीये तु "प्राङ्मुखो वा शिष्यः प्रत्यङ्मुख आचार्य" इति (अ० १सू० ५५)।

आचान्तो यथाशास्त्रमिति। प्रागुक्तमाचमनविधिं स्मारयति।

ब्रह्मा जलिः कृतो येनेति। आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य परनिपातः। 'ब्रह्मा जलिकृदि'ति वा पाठः।

लघुवासा धौतवासाः। प्रक्षालनेन लघुनी वाससी भवतः। अतो लघुत्वेन वाससः शुद्धिर्लक्ष्यते। अथवा यं रोमादिस्थूलवसनः चित्तव्याक्षेपे ताड्यमानो न प्रहारं वेदयेत्ततश्च न युक्तः पठेत्। अपनीयमाने तु वाससि गुरोः खेदः स्यात्। निरावरणे च काये रज्ज्वादिना ताड्यमानो महतीं बालो

वेदनामनुभवेत्। अतो द ष्टार्थं लघुवासस्त्वम्।

जितानि नियमितानीन्द्रियाण्युभयान्यपि येन स जितेन्द्रियः। न इतस्ततो वीक्षेत, यत्किञ्चिन्न श णुयादध्ययने वहितो भवेदित्युक्तं भवति।। ७०।।

**ब्रह्मारम्भे वसाने च पादौ ग्राह्यौ गुरोः सदा।**

**संहत्य हस्तावध्येयं स हि ब्रह्मा जलिः स्म तः।। ७१।।**

**अन्वय** - ब्रह्मारम्भे अवसाने च सदा गुरोः पादौ ग्राह्यौ हस्तौ संहत्य अध्येयम् स हि ब्रह्मा जलिः स्मतः।

**हिन्दी अर्थ** - वेद पढ़ने के आरम्भ ओर समाप्ति पर सदैव गुरु के दोनों चरणों को छूकर दोनों हाथ जोड़कर अभिवादन करने क`बाद पढ़ना चाहिये; इसी हाथ जोड़ने को 'ब्रह्मा जलि' कहा जाता है।। ७१।।

**मेधातिथिः।** ब्रह्मशब्दो यमनेकार्थो प्यध्ययनाधिकारादत्र वेदवचनः प्रतीयते। तस्यारम्भे। निमित्तसप्तम्येषा। अध्ययनाधिकारादेव च तद्विषया ध्ययनक्रिया, तस्यायमारम्भः, प्रथमाव त्तिः पुरुषस्य। तत्रेदं पादग्रहणम्। वेदस्य तु यान्याद्याक्षराणि 'अग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' इति न सो त्रारम्भ उच्यते। नहि तस्य निमित्तभावः सम्भावितः, नित्यत्वात्। कादाचित्कं हि निमित्तं भवति। तेनैतदुक्तं भवति-वेदाध्ययनमारिप्समानो गुरोः पादसङ्ग्रहणं कुर्यात्कृत्वा ततः स्वाध्यायाक्षराण्युच्चारयेन्न पुनः प्रव त्ताध्ययनक्रियः पादौ ग ह्णीयात्।

"ननु चाद्यक्रियाक्षण आरम्भः, स च निमित्तम्। विद्यमानस्य च निमित्तत्वं युक्तं जीवनस्येव। अत्र गेहदाहाद्यतीतमपि निमित्तं तत्र तथैव श्रवणम्। तस्मात्सहप्रयोग एवाध्ययनपादोसङ्ग्रहणयोर्युक्तः"।

उच्यते। अध्यापनाध्यवसाय 'आरम्भ' उच्यते, नाद्यः क्रियाक्षणः। यदैव गुरुरधीष्वेत्याह तदैवाध्यवस्यति माणवकः। अतस्तदनन्तरं पादोपग्रहः। उपकारप्रव त्तस्य गुरोश्चित्तप्रसादनमेतत्। यथा लोके कश्चिदुपकारप्रव त्तं सभाजयति वाचा 'ननु त्वया वयमस्मात्पापान्मोचिता' इति। अनक्षरा चेयमध्येषणा 'उपसन्नो स्म्यध्ययनायेति'। न हि गुरुरुपरोध्यो ध्यापयेति। केवलमुपसदनमस्य कर्तव्यं सम्बोधार्थमवसरो ध्ययनस्येति। अतः कृतोपसदनस्य वेदाक्षरोच्चारणम्। अपि च संहत्य हस्तावध्येतव्यमित्युच्यते। तत्राधीयानः पादोपसङ्ग्रहणहिविधिमतिक्रमेत।

अवसानं समाप्तिरध्ययनादुपरमः। यद्यपि ब्रह्मशब्द आरम्भे गुणभूतस्तथाप्यवसानस्य सापेक्षत्वात्सन्निहितत्वाद् ब्रह्मपदेनैव सम्बन्धः प्रतीयते, अन्यस्याश्रुतत्वात्।

सदाग्रहणमन्वहं भाविप्रयोगारम्भावसानयोरेष विधिर्यथा स्यादितरथा य एव व्रतादेशानन्तरो मुख्यप्रारम्भः तत्रैव स्यात् यथा न्वारम्भणीया दर्शपूर्णमासारम्भे चोदिता य एवाधानान्तरभावी दर्शपूर्णमासप्रयोगारम्भः तत्रैव भवति, न मासिकप्रयोगारम्भे।

प्रातरारभ्य यावदाह्निकं न निव त्तं प्रपाठकद्वयमात्रपरिमाणं, तावदेकैव सा ध्ययनक्रियेति। अन्तरा कथञ्चिद्विच्छेदे पि पुनः प्रव त्तौ नारम्भशब्दवाच्यता स्तीति, न पुनः पादोपसदनं क्रियते। स्म त्यन्तरे च पठ्यते "पादोपग्रहणं गुरोः प्रातरन्वहमिति"।

संहत्य-संलग्नो संश्लिष्टौ परस्परं कृत्वा ध्येयम्। कच्छप इव यः संनिवेशो हस्तयोः प्रसिद्धस्तथा कर्तव्यः। स हि ब्रह्मा जलिः। पदार्थकथनमेतत्।। ७१।।

**व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः।**

**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः।। ७२।।**

**अन्वय** - गुरोः उपसङ्ग्रहणम् व्यत्यस्तपाणिना कार्यम्। सव्येन सव्यः दक्षिणेन दक्षिणः स्प्रष्टव्यः।

**हिन्दी अर्थ** - गुरु के चरणों का स्पर्श हाथों को अदल-बदल करके करना चाहिए। बायें हाथ से बायां चरण ओर दायें हाथ से दायाँ पैर का स्पर्श करना चाहिये।। ७२।।

**मेधातिथिः।** यदुपसङ्ग्रहणं पूर्वश्लोके गुरोरुक्तं तद्व्यत्यस्तपाणिना कार्यम्।

कीद शः पुनः पाण्योर्व्यत्यासः कर्तव्य इत्यत आह। सव्येन हस्तेन सव्यः पादः स्प्रष्टव्यः स्पर्शः कर्तव्यो, न तु चिरं निपीड्यासितव्यम्। एष च व्यत्यासो युगपदितरेतरदिक्स् चारेण हस्तयोर्भवति। अग्रतः स्थितेन सम्मुखेन गुरोरुपसंङ्ग्रहणं कर्तव्यम्। तत्र वामो दक्षिणमार्गं नीयते, दक्षिणो वाममित्येवं सव्येन सव्यः स्प ष्टो भवति, दक्षिणेन च दक्षिण इत्येष पाणिव्यत्यासः।

अन्ये तु 'विन्यस्तपाणिने'ति पठन्ति। स्पर्शादेव च विन्यासे सिद्धे नाग्नितप्पायः पिण्डस्पर्शनवद्दाहभयादङ्गुल्यग्रमात्रेण स्पर्शनं कर्तव्यमपि तु हस्तौ विन्यसितव्यौ निधातव्यौ। पीडनं तु पीडाकरं निषिद्धमिति वर्णयन्ति।। ७२।।

**अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः।**
**अधीष्व भो इति ब्रूयाद्विरामो स्त्विति चारमेत्।। ७३।।**

**अन्वय** - गुरुः र्नित्यकालम् अतन्द्रितः अध्येष्यमाणं (शिष्यम्) भो अधीष्व इति ब्रूयात् विरामश्च अस्तु इति आरमेत्।

**हिन्दी अर्थ** - गुरु सदैव पढ़ाते समय आलस्यरहित होकर पढ़ने वाले शिष्य को 'हे शिष्य पढ़ो' इस प्रकार कहे और 'अब विराम करो' ऐसा कहकर पढ़ाना समाप्त करे।। ७३।।

**मेधातिथिः।** अध्येष्यमाणमित्यादिनि प्राग्व्याख्यातानि पदानि। गुरोरयं नियोगः। गुरोर्यदा माणवको ध्यापयितुमभिलषितस्तदा अधीष्व भो इत्यामन्त्रयितव्यः। अनामन्त्रितेन न गुरुः खेदयितव्य 'उपदिशानुवाकमिति'। उक्तं च "आहूतश्चाप्यधीयीतेति।"।

विरोमो स्तित्वत्येतं शब्दं समुच्चार्यारमेत् निवर्तेत। कः ? गुरुरेव, प्रथमान्तनिर्देशात्। अथवा गुरुणोत्स ष्टो निवर्तेत, न स्वेच्छया। एवं चेदं व्याख्यायते, 'यदागुरुर्विरामो स्त्विति ब्रूयात्तदा विरमेद्ब्रह्मचारी।'

अन्ये त्वध्येत मात्रस्य-शिष्याणामुपाध्यायस्य च-उपरमणकाले धर्ममिममिच्छन्ति। तथा च स्म त्यन्तरम्। "स्वाध्यायमधीत्य विरमणकाले प्रदेशिन्या प थिवीमालभ्य स्वस्तीति यजुर्ब्रूयाद्विस्पष्टामिति सामसु, विरामः परमास्व क्षु, आरमस्त्वथर्वसु।"

अतन्द्रितः अनलसः। तन्द्रा लस्यम्। तद्योगात्पुरुषतन्द्रित इत्युच्यते। त्यक्त्वा लस्यमतन्द्रितः। अनुवादश्चायम्। नात्र तन्द्रा श्रमः। न त्वियमाशंका कर्तव्या "य अतंद्रितस्तस्यायं विधिः, आलस्यवतस्त्वन्यः"।। ७३।।

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।**
**स्त्रवत्यनो...ङ्कृतं पूर्वं परस्ताच्च विशीर्यति।। ७४।।**

**अन्वय** - (शिष्यः) सर्वदा ब्रह्मणः आदौ च अन्ते प्रणवं कुर्यात् पूर्वम् अनो...ङ्कृतम् स्रवति पुरतान् च (अनोङ्कृतम्) विशीर्यति।

**हिन्दी अर्थ** - शिष्य सदैव वेद पढ़ने के आरम्भ और अन्त में 'ओ३म्' का उच्चारण करे। आरम्भ में ओंकार का उच्चारण न करने से पढ़ा हुआ बिखर जाता है अर्थात् भलीभांति ग्रहण नहीं हो पाता और बाद में 'ओ३म्' का उच्चारण न करने से पढ़ा हुआ स्थिर नहीं रहता।। ७४।।

**मेधातिथिः।** अत्रापि पूर्वोक्तेन न्यायेन ब्रह्मण आदावन्ते च प्रणवं कुर्यात् ब्रह्मविषयाया अध्ययनक्रियाया इति द्रष्टव्यम्।

प्रणवशब्द ॐकारवचनः। तथा च वक्ष्यति स्त्रवत्यनोङ्कृतमिति।

सर्वदाग्रहणमध्ययनविधिमात्रधर्मो यथास्यादितरथा प्रकरणाद्ग्रहणार्थ एव ब्रह्मचारिणः स्यात्। अस्मिंस्तु सति यो प्यविस्मरणार्थो, यच्च "अहरहः स्वाध्यायमधीयीत" इति ग हस्थादीनां, तत्र सर्वत्र सिद्धं भवति। सन्ध्याजपादौ तु स्वशब्देन विधास्यति 'एतदक्षरमेतां चेति'। न चायं वेदधर्मो येन यत्र

कुत्रचिद्वैदिकवाक्योच्चारणमारभेत तत्र प्राप्नुयात्। अतो होम-मन्त्रजप-शास्त्रानुवचन-याज्यादीनामारम्भे नास्ति प्रवणः, अन्यत्राप्युदाहरणार्थे वैदिकवाक्यव्यहारे। तस्मात्स्थितं प्राकारणिकस्वाध्यायाध्ययनविधिधर्मार्थं सर्वदाग्रहणम्। प्रणवप्रयोगस्यान्वाहिकारम्भार्थता तु नित्यकालग्रहणानुव त्यैव सिद्धा।

अस्यार्थवादः स्त्रवत्यनोंकृतम्। पूर्वं प्रारम्भे अनोङ्कृतं ब्रह्म स्त्रवति। ओमाकृतं ॐशब्देन संस्कृतम्। साधनं कृतेति समासः। अथवा ॐकृत उच्चारितो यस्मिन्ब्रह्मणि तदोंकृतं सुखादित्वात्परनिपातः। परस्ताच्च समाप्तौ। चकारेणानोकृतमिति सम्बध्यते।

स्त्रवति विशीर्यति इत्युभाभ्यामपि नैष्फल्यमध्ययनस्य प्रतिपाद्यते। अधीतं ब्रह्म यस्मिन्कर्मणि विनियुज्येत तन्निष्फलं भवतीति निन्दार्थवादश्च। पाकार्थं निषिक्तस्याप्राप्तपाकक्षीरादेरवच्छिद्रिते, भाजने य इतस्ततो विक्षेपः प्रक्षरणं तत् स्त्रवतीत्युच्यते। लब्धपाकस्य पिण्डीभूतस्य भोग्यतां प्राप्तस्य यो विनाशः स विशरणम्।। ७४।।

**प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः।**
**प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति।। ७५।।**

**अन्वय** - प्राक्क् कूलान् पर्युपासीनः पवित्रैः चैव पावितः त्रिभिः प्राणायामै पूतः तत ओंकारमर्हति।

**हिन्दी अर्थ** - पूर्व की ओर मुख वाले कुशासन पर बैठकर कुशनिर्मित पवित्रों से (कुशाओं को एकत्र करके बनाये गए गुच्छे से) पवित्र होकर (छींटे देकर) तीन प्राणायामों को करने पर तब ओंकार का उच्चारण करने योग्य होता है।। ७५।।

**मेधातिथिः।** कुलशब्दो दर्भाग्रवचनः। तान्पर्युपासीनः तेषु प्रागग्रेषु दर्भेषूपविष्ट इत्यर्थः। 'अधिशीङ्स्थासा'मिति (पा० सू० १।४।४६) स्था आ आसामित्याङा प्रश्लेषात्कर्मत्वम्। परि उप आ आसीन इति इहाप्याङा श्लिष्टनिर्दिष्टो द्रष्टव्यः। पर्युपशब्दावनर्थकौ।

पवित्रैर्दर्भैरेव पावितः शुचित्वमापादितः। अघमर्षणादिस्तु मन्त्रो नेह पवित्रशब्देनोच्यते, ब्रह्मचारिणस्तदानीमनधीतत्वात्तेषाम्। न च दर्भाः स्वसत्तामात्रेण का चित् क्रियामकुर्वतः पावने करणं भवन्तीति। अवान्तरव्यापारापेक्षया स्म त्यन्तरे प्राणोपस्पर्शनं प्रतीयते। आह च गौतमः। (अ० १ सू० ४६।५०) "प्राणोपस्पर्शनं दर्भैः। प्राक्कूलेष्वासनं च"।

प्राणायामैस्त्रिभिः पूतः। मुखनासिकास चारी वायु प्राणः तस्यायामो निरोधः शरीरे धारणं, बहिर्निष्क्रमणनिषेधः, तस्य स्म त्यन्तरे धारणाकालस्य मानं समाम्नातम्। मन्त्रानुस्मरणं च। "प्रतिप्रणवंसयुक्तां गायत्रीं शिरसा सह। त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते"। वसिष्ठेन भगवता महाव्याहृतयो प्युक्ताः। मन्त्रावसान एव निरोधावधिः। अन्यस्यानाम्नातत्वात्सर्वस्म तीनां चासति विरोध एकार्थत्वादिहाप्येवमेवानुष्ठानम्।

"नन्वेवमितरेतराश्रयः स्यात् कृतेषु प्राणायामेषु ओङ्कारो न कर्तव्यो, न चोङ्कारेण विना प्राणायमो निर्वर्तते"।

नैष दोषः। त्रिर्जपेदिति प्राणायामेषु मानसव्यापारेणोङ्कारस्य स्मरणमुच्यते। न हि निरुद्धप्राणस्य शब्दोच्चारणं सम्भवति। यद्यपि जपः कश्चिद्वाग्व्यापारसाध्यो भवति स्वाध्यायाध्ययने तु पुनरुच्चारणं विवक्षितम्। अध्ययनक्रियाया एवंरूपत्वाच्छब्दक्रियायां ह्ययं धातुः, श्रोत्रग्राह्यश्च शब्दो न केवलेन मनसा ग ह्यते।

न चायमोङ्कारधर्मो येनान्यत्रापि तस्मिन्नुच्चार्यमाणे पि प्रसज्येत। उक्तं च "स्वाध्यायारम्भे कर्तव्य" इति। ओङ्कारधर्मत्वे हि लौकिकेषु वाक्येष्वोमिति ब्रूम इत्यादिषु प्रसज्येत।

गौतमेन तु पठितम् ञ(अ० १ सु० ४६) - "प्राणायामास्त्रयः प चदशमात्रा" इति। मात्राशबदेन चाविकृतस्य स्वरस्याकारादेर्यावान्कालः स उच्यते। तत्र विरोधात्स्म त्यन्तरोक्तः कालो नास्ति, न च मन्त्रस्मरणं, तत्रानोङ्कारा अपि प्राणायामाः सन्तीति नेतरेतराश्रयदोषापत्तिः।

तत ॐकारमर्हति कर्त ॅमिति शेषः, यदा यं समुदाय एव रूढ़िरूपेण प्रणववचनः। यदि तु करणं कारः। ओमित्येतस्य'कार' उच्चारण' मोङ्कार'स्तदा नास्ति पदान्तरापेक्षा।

प्रणवशब्देन कर्तव्यतामुक्त्वा त्रोङ्कारमित्यनुवदत्यत एतावेकार्थौ। तथा च दर्शितम्।। ७५।।

**अकारं चाप्युकारं च मकारं च प्रजापतिः।**
**वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च।। ७६।।**

**अन्वय** - प्रजापतिः अकारं उकारं मकारं च भूर्भुवः स्वः इति च वेदत्रयात् निरदुहत्।

**हिन्दी अर्थ** - परमात्मा ने ओ३म् शब्द के 'अ' 'उ' और 'म्' अक्षरों को तथा 'भूः' 'भुवः', 'स्वः' इन तीन व्याहृतियों को तीनों वेदों से दुहकर साररूप में निकाला है।।७६।।

**मेधातिथिः।** पूर्वस्व विधेरर्थवादः अक्षरत्रयसमाहाररूप ॐकारस्तत्रैकैकस्य उत्पत्तिमाह। वेदत्रयात्त्रिभ्यो वेदेभ्यः निरदुहदुद्ध तवान्यथा दध्नो घ तमुद्ध्रियते। न केवलमक्षरत्रयं यावदिदम् अपरं भूर्भुवः स्वरिति।। ७६।।

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।**
**तदित्य चो स्याः सावित्र्याः परमेष्ठी प्रजापतिः।। ७७।।**

**अन्वय** - परमेष्ठी प्रजापतिः तदिति अस्याः सावित्र्याः ऋचः पादं पादम् त्रिभ्य एव तु वेदेभ्यः अदूदुहत्।

**हिन्दी अर्थ** - सबसे महान् परमात्मा ने 'तत्' इस पद से प्रारम्भ होने वाली सावित्री ऋचा (=गायत्री मन्त्र) का एक-एक पाद (प्रथम पाद है-'तत्ववितुर्वरेण्यम्', द्वितीय पाद-'भर्गो देवस्य धीमहि', त तीय पाद-'धियो यो नः प्रचोदयात्') तीनों वेदों से दुहकर सार रूप बनाया है।। ७७।।

**मेधातिथिः।** अयं "तत्सवितुर्वरेण्यम्" इत्येतस्याः गायत्र्या उत्पत्त्यर्थवादो विधानार्थः। पूर्वश्लोके चार्थवादादेव व्याहृतीनामपि विधानम्। क्रमस्तु पाठावगम्यः। वक्ष्यति च-"एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम्" इति।

अदूदुहदुद्ध तवानिति। यद्यपि तदित्येतत्प्रतीकेन 'तत्सवितुर्व णीमह' इति वा शक्यते लक्षयितुम्। न तु सा त्रिपदेति। त्रिपदा च ग्राह्या। त्रिपदा चैव सावित्रीति।

कश्यपादयो पि प्रजापतयः सन्त्यतो विशिनष्टि परमेष्ठीति। हिरण्यगर्भः। स हि परमे स्थाने नाव त्तिलक्षणे स्थितः। आदरातिशयार्थं चैतत्सावित्र्याः। साक्षात्किलेयं सर्वमुख्येन प्रजापतिना वेदेभ्यः समुद्ध तेति।। ७७।

**एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।**
**सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते।। ७८।।**

**अन्वय** - एतदक्षरम् व्याहृतिपूर्विकां च एतां वेदवित् विप्रः संध्ययोः जपन् वेदपुण्येन युज्यते।

**हिन्दी अर्थ** - इस ओ३म् अक्षर को और 'भूः', 'भुवः:', 'स्वः' इन व्याहितयों' सहित इस गायत्री ऋचा को वेदपाठी द्विज दोनों संध्याओं-प्रातः, सायंकाल में जपते हुए वेदाध्ययन के पुण्य से ही युक्त होता है।। ७८।।

**मेधातिथिः।** सत्यपि स्वाध्यायविधिप्रकरणे वाक्यात्सन्ध्याजपविधिरयम्। तत्र गायत्र्या अनुवादः प्रणवव्याहृतीनामप्राप्तविधिः।

अत्र कश्चिदाह। "नायं सन्ध्याविधिप्रकरणात्। विधिर्हि भवन्ब्रह्मचारिणः स्यात्तस्य प्रकृतत्वात्। न च तस्य सम्भवति। इह हि वेदविदित्युच्यते। न च तस्य प्रथमोपनीतस्य वेदवित्त्वमस्ति। अपि च फलमत्र श्रूयते वेदपुण्येन युज्यते। नित्यश्च सन्ध्योपासनविधिः न फलार्थः। न चैतद्विद्गः किमिदं वेदपुण्यं नाम फलं, येन योगो यं जप उच्यते। यदि तावद्वेदाध्ययनात्पुण्यमभिप्रेतं तदवाप्तिर्वेदपुण्येन 'योगो भिप्रेतस्तत्र यस्तावदयं प्रकृतः स्वाध्यायमविधिस्तस्य" नार्थावबोधाद ते कि चितत्फलमस्त्यश्रुतत्वात्

द ष्टत्वाच्चार्थावबोधस्य कल्पना पि नास्ति। यश्च ग हस्थादीनां विधिः "अहरहः स्वाध्यायमधीयीत" इति सो पि नित्य एव। यत्तत्र फलश्रवणं 'पयोदधि घ तं मधु' इति सो र्थवाद एव। तस्मान्नायं विधि ाः। विधौ हि सर्वमेतद्विवक्षितव्यम्। यदा त्वयमर्थवादस्तदा 'जपन्नि'ति प्रकृतमध्ययनमुच्यते, 'वेदपुण्येने'-त्येतदपि यथाकथ चिन्नीयते"।

अत्रोच्यते। वाक्येन प्रकरणं बाध्यत इत्युक्तमेव। यत एव वेदवित्पदं सन्ध्यापदं च न प्रकृतविषयतया न्वेति, तत एवान्यत्रायं विधिः। सन्ध्ययोरेतत्त्रयं जपेदित्येतावान्विधिः। वेदवित्पदमनुवदिष्यते। ग हस्थादीनां वेदवित्त्वस्य सम्भवात्। "ब्रह्मचारिणो वेदवित्त्वं न सम्भवतीति" चेत् किं तदीयेन सम्भवेन। यथाप्राप्तानुवादे हि सर्वाश्रमिणामधिकारः। कर्त विशेषणे हि वेदवित्पदे ब्रह्मचारिणो नाधिकारः स्यात्। "कथं पुनरस्यानुवादः"। वाक्यभेदप्रसंङ्गात् विधौ सन्ध्याविधौ प्राप्ते प्रणवव्याहृतयस्तावदप्राप्तास्तत्र विधातव्याः। तत्र यद्यपरं वेदविदिति विधीयते तदा वाक्यभेदः स्यात्। प्राप्ते हि कर्मणि नानेकार्थविधानं सम्भवति। प्रणवव्याहृतीनां तु नानुवादः सम्भवति। तेनायमत्र वाक्यार्थः 'सन्ध्ययोर्यत्सावित्रीं जपेदित्युक्तं तत्रायमपरो गुणः प्रणवव्याहृतिपूर्विकां तां जपेत्'। विप्रग्रहणं च तदा प्रदर्शनार्थमेव।

यदप्युक्तं-"फलमत्र श्रूयते नित्यश्च विधिः सन्ध्यायाः"। को नामायं विरोधः ? नित्य एव तस्मिन्गुणे कामो भविष्यति। प्रणवव्याहृतिगुणकात्तस्मादिदं फलमिति। यथा गोदोहनप्रणयकनकादग्निहोत्रात्पशवः फलम् "गोदोहनेन पशुकामस्य प्रणयेत्" इति। वाक्यसामर्थ्येनाध्यारुह्यैतदुक्तं, न त्वयं काम्यो विधिः। स्म त्यन्तरे हि नित्य एवायं विधिः स्पष्ट एवोक्तो "गायत्रीं शिरसा सार्धं जपेत् व्याहृतिपूर्विकाम्" इति। फलानवगमो भवतैवोक्तः। अय ह्यर्थो वेदपुण्येनेति। 'वेदे यत्सन्ध्योपासनात्पुण्यमुक्तं तेन त्रिकमेतज्जपन्नुज्यते, न केवलं गायत्रीम्'। पुण्यं च धर्मः, वेदमूलत्वात्स्म तीनां स्म त्युक्तमपि वेदपुण्यतया व्यपदिश्यते, वेदस्य पुण्यं 'वेदपुण्यम्'। किं च वेदस्य पुण्यम्। यत्तेन प्रतिपाद्यते। पठ्यमानाद्वेदाद्यज्जायते तदपि शक्यते तस्येति वक्तुम्, किंत्वसाधारणत्वात्प्रतिपाद्यमेव युक्तं व्यपदेष्टुं नोत्पाद्यम्। यागादयो धर्ममुत्पादयन्ति, प्रतिपादकस्तु वेद एव।

ये प्यन्त्यस्य पादस्य सामर्थ्यमाहुः "यदुक्तं 'नित्यः स्वाध्याय' इति तत्र सन्ध्यायां त्रिकजपादेव कृतार्था भवन्तीति"-तदप्यसत्। एवं सति तेन विधिना विकल्पेत। तत्र च पाक्षिको नित्यस्वाध्यायताया बाधः स्यात्। न चाबाधे सम्भवति बाधो भ्युपगन्तव्यः।

एतदक्षरमित्योङ्कारस्य प्रतिनिर्देशः। "ननु च नैतदेकमक्षरम्। द्वे वा त्रीणि वा"। उच्यते। अक्षरशब्देन केवलं स्वर उच्यते, व्य जनसंयोगश्च। तत्रेह याद शः प्रकृतः ताद शस्याभिधानम्। एतां च "तत्सवितुर्वरेण्यमिति" सावित्रीम्। व्याहृतयः पूर्वाः यस्यास्तां व्याहृतिपूर्विकाम्। तिस्रः प्रकृता एव ता व्याहृतयो ग ह्यन्ते, प्रकृतपरत्वादस्य, न सप्त सत्यान्ताः।। ७८।।

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।**
**महतो प्येनसो मासात् त्वचेवा हिर्विमुच्यते।। ७६।।**

**अन्वय** - द्विजः एतत् त्रिकम् सहस्रकृत्वः तु अभ्यस्य महतः अपि एनसः मासात् अहि त्वचा इव विमुच्यते।

**हिन्दी अर्थ** - द्विज इन तीनों अर्थात्, व्याहृतियों और गायत्री मन्त्र को बाहर एकान्त में एक हजार बार प्रतिदिन जपते हुए बड़े भारी पाप से भी एक मास में सांप की केंचुली के समान छूट जाता है।। ७६।।

**मेधातिथिः।** बहिरित्यनाव तो देश उच्यते। तेनैतदुक्तं भवति, ग्रामनगराभ्यां बहिररण्यदीपुलिनादौ। सहस्रवारान् अभ्यस्य आवर्त्य। "ननु कृत्वसुचो प्याव त्तिः प्रतिपाद्यते, अभ्यस्येत्यनेनापि। तत्र पौनरुक्त्यम्"। सामान्यविशेषभावाददोषः। अभ्यस्येत्यनेन सामान्यतो भ्यास उक्तस्तत्र विशेषापेक्षायां सहस्रकृत्वेति। न च कृत्वसुजन्तादेवोभयावगतितस्तस्य क्रियाविशेषोपेक्षत्वात्। न हि देवदत्तः प चकृत्वो हन इत्युक्ते यावद्भुङक्त इति नोच्यते तावद्वाक्यार्थः समाप्यते।

"ननु चाभ्यस्यत्यनेनापि न काचिद्विशिष्टा क्रियोपात्ता"।

सत्यम्। जपः प्रकृतस्तमभ्यस्येति प्रतीयते। 'आव त्तिः' पौनःपुन्येन सेवा।

महतो प्येनसः। महत्पापं च ब्रह्मत्यादि, ततो पि मुच्यते, किं पुनरुपपातकेभ्यः। अपिः सम्भावने, न समुच्चये। भेदोपादानेन समुच्चयावगमो यथा देवदत्तस्यात्र प्रभुत्वं यज्ञदत्तस्यापि। इह न तथा निर्देशः।

"केभ्यः पुनरुपपातकेभ्यो यं मोक्ष उच्यते। गोवधादीन्युपपातकानि। तानि च प्रतिपापमाम्नातप्रायश्चित्तानि सरहस्यानि। यानि वा संवेत्ति न कृतान्यनुक्तपरिहाराण्यवश्यम्भावितया च ज्ञायते कृतानीति, तेषामपि नित्यानि सन्ध्योपासनादीन्यपनोदकानि। यदि चैतत्प्रायश्चित्तं स्यात्तदा तत्रैवावक्ष्यत्, "जपेद्वै नियताहारः त्रिर्वै वेदस्य संहितामिति" वत्। प्रायश्चित्ते चास्मिन्प्रायश्चित्तप्रकरणमेवानर्थकं स्यात्। को हि दैवशप्तो जपमात्रसाध्यां निष्कृतिं हित्वा कृच्छ्रेषु शरीरप्राणहरेष्वध्यवस्येत्। उक्तं च-"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संप्राप्तौ को विद्वान्यत्नमाचरेत्"। तथा "पणलभ्यं हि प्राज्ञः क्रीणाति दशभिः पणैः" इति। न च प्रकृतेनैकवाक्यताबीजं किंचिद्विभज्यमानसापेक्षत्वाद्यस्ति येन तच्छेषतया र्थवाद उच्येत"।

अत्रोच्यते। विधिरेवायम्। पापप्रमोचनार्थ एवायं प्रयोगः। पत्तूक्तं "विषमशिष्टैर्विकल्पो न सिध्यतीति"-जपप्रायश्चित्त एवास्मिन्विकल्पार्थो भविष्यति। अघमर्षणादिभिः सर्वपापापनोदनमुक्तं, तेनास्य विकल्पः। अघमर्षणे हि त्र्यहमुपवास उक्तः। इहाश्नन्नेव मासिकेन प्रयोगेण शुध्यति। ततो न दूरविप्रकृष्टेन तपसा समीयते, येन विषमशिष्टता स्यात्। अथवा पूर्वकृतस्यैनसः शुद्धिरेषा ग्रहदौःस्थित्यादिसूचिते दैवे दोषे। तस्मान्मोक्षः। अनिष्टम् 'एन' उच्यते। तस्मान्मुच्यते। तत्फलेन न सम्बध्यत इत्यर्थः।

त्वचेवाहिः। जीर्णया त्वचा मुक्तः सर्पो यथा भवति। निरवशेषेण पापनाश एतेन प्रतिपाद्यते। यत्तु दौश्चर्मादिसूचितं पूर्वकृतमशुभं तत्र स्म त्यन्तरे प्रायश्चित्तमाम्नातं बहु। तत्प्रायश्चित्तेष्वेव निदर्शयिष्यामः। एतदेवाभिप्रेत्योक्तम्। "जपतां जुह्वतां चैव विनिपातो न द श्यते" इति।। ७६।।

**एतर्चया विसंयुक्तः काले च क्रियया स्वया।**

**ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु।। ८०।।**

**अन्वय** - ब्राह्मणक्षत्रियविद्योनिः एतया ऋचा काले स्वया क्रियाया च विसंयुक्तः साधुषु गर्हणां याति।

**हिन्दी अर्थ** - ब्राह्मण, क्षत्रिय और वैश्य वर्ण में जन्मा कोई द्विज इस गायत्री मन्.ा से और समयानुसार होने वाली संस्कार आदि क्रियाओं से रहित होता हुआ श्रेष्ठ लोगों में निन्दा का पात्र बनता है। ८०।।

**मेधातिथिः।** एतया सावित्र्या। विसंयुक्तः हीनसन्ध्योपासनस्त्यक्तस्वाध्यायाश्च। गर्हणां निन्दां साधुषु विशिष्टेषु याति प्राप्नोति। कीद शीं गर्हणां प्राप्नोत्यत आह काले च क्रियया स्वया। काल "आषोडशात्" इत्यस्मिन्वियुक्ते गते निन्द्यते। एवमुपनीतो पि स्वाध्यायारम्भयोग्यः सावित्रीवर्जितो व्रात्य एव भवति। त्रयाणां या साधारणी स्वक्रिया। सेह निर्दिष्टा। सा चोपनयनमेव। कालशब्दश्चैवमर्थवान्। अध्ययनादिस्वकर्मविवक्षायामेतावदेव वाच्यं स्यात् यत् क्रियया स्वयेति।

योनिशब्दो जन्मपर्यायो जात्यर्थं गमयति। विप्रादिजातीय इत्यर्थः। अर्थवादो यं व्रात्यप्रायतित्तार्थः।। ८०।।

**ओङ्कारपूर्विकास्तिस्त्रो महाव्याहृतयो व्ययाः।**

**त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्।। ८१।।**

**अन्वय** - ओङ्कारपूर्विकाः तिस्त्रः अव्ययाः महाव्याहृतयः त्रिपदा सावित्री च ब्रह्मणो मुखम् विज्ञेयम्।

**हिन्दी अर्थ** - जिनके पहले ओंकार='ओम्' है, ऐसी अविनाशिनी महाव्याहृतियां-'भूः, भुवः, स्वः, और तीन पाद वाला गायत्री मन्त्र इसे वेद का मुख समझना चाहिये।। ८१।।

**मेधातिथिः।** ॐकार पूर्वो यासां ता ओङकारपूर्विकाः। महाव्याहृतयः प्रकृता एव भूर्भुवः स्वरित्येते शब्दा अभिधीयन्ते अव्यया अविनाशिन्यः। फलस्य दीर्घकालत्वादेवमुच्यते। अन्यथा "सर्व एव शब्दा नित्या" इति विशेषणमनर्थकम् त्रिपदा 'तत्सवितु'रित्येषा सावित्री ब्रह्मणो मुखम्। आद्यत्वान्मुखव्यपदेशः। अतश्चारम्भे अध्येयमेतदित्यस्यैवार्थवादः। अथवा मुखं द्वारमुपायो ब्रह्मप्राप्तिरनेन भवतीत्येतदेवाह।। ८१।।

**यो धीते हन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।**

**स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान्।। ८२।।**

**अन्वय** - यः एतान् त्रीणि वर्षाणि अहनि अहनि अतन्द्रितः अधीते सः वायुभूतः खमूर्तिमान् परं ब्रह्म अभ्येति।

**हिन्दी अर्थ** - जो व्यक्ति इनको अर्थात् ओंकारसहित तीन महाव्याहृतियों और गायत्री को तीन वर्ष तक प्रति दिन आलस्य रहित होकर जपता है वह वायुरूप=इच्छानुसार विचरण करने वाला और आकाशरूप=सूक्ष्मशरीरी होकर परब्रह्म को प्राप्त कर लेता है।। ८२।।

**मेधातिथिः।** आकाश इव सर्वव्यापी विभुः सम्पद्यते, खमूर्ति खस्वभाववान् भवति। न तु 'मूर्तिः' शरीरम्, आकाशस्य शरीराभावात्। "अथ किमिदं ब्रह्म, यद्रूपात्तिरुच्यते"। परमात्मा नन्दरूपः, यस्येमे क्षेत्रज्ञा पवनजवोद्धतस्य वारिशेरिवोर्मय। ते यथा प्रशान्तावस्थे तस्मिंस्तद्रूपा भवन्ति, एवममी तद्रूपा आत्मानः सम्पद्यन्ते। विशेषतश्च सर्वमेतद् द्वादशे वक्ष्यते।

अध्ययनमिदं गायत्र्याश्चोदितं न जपो, न चात्राव त्तिगणना स्ति। अतन्द्रित इति वचनाब्दहुकृत्वः करणं प्रतीयते। सकृत्प्रयोगे हि नास्ति तन्द्राशंका। मोक्षार्थिनो यं विधिः।। ७२।।

**एकाक्षरं परं ब्रह्म प्राणायामः परं तपः।**

**सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते।। ८३।।**

**अन्वय** - एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः सावित्र्याः तु परं नास्ति मौनात् सत्यं विशिष्यते।

**हिन्दी अर्थ** - एक अक्षर अर्थात् 'ओम्' ही परब्रह्म है, प्राणायाम करना ही श्रेष्ठ तप है गायत्री से बढ़कर दूसरा कोई मन्त्र नहीं है, मौन की अपेक्षा सत्यभाषण विशिष्ट है।। ८३।।

**मेधातिथिः।** ओंकार एकाक्षरम्। तत्परं ब्रह्म। ब्रह्मप्राप्तिहेतुत्वात्। "तज्जपस्तदर्थभावना" (योगसू० १।२८) तया ब्रह्मप्राप्तेरेवमुच्यते। ओमिति ब्रह्माभिधानम्। एवं ह्याहुः 'तस्य वाचकः प्रणव' इति। (योगसू० १/२७) तत्परं प्रकृष्टं कुतः अन्याभ्यः ब्रह्मोपासनाभ्यः? "अन्नं ब्रह्मेत्युपासीत' (तैति० ३/२) "आदित्यो ब्रह्मेत्यादेश" (छां० ३।१६।१) इति एवमाद्याभ्य उपासनाभ्यः ओंकारोपासना प्रकृष्यते। अध्ययनादेव तत्प्राप्त्यभिधानात्। शब्दस्यैव च ब्रह्मत्वेन श्रवणात्-"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती" ति। सर्वो ह्यर्थो वाग्व्यहारानतीतो, वाचश्च सर्वस्या आंकारो मूलम्। तथा च श्रुतिः "तद्यथा शंकुना सर्वाणि पत्राणि सन्त ण्णान्येवमोङ्कारेण सर्वा वाक् सन्त ण्णा; ओंकार एवेदं सर्वमिति" (छां० २।२३।३)। सन्तर्दनमनुस तिः आश्रयभावापत्तिर्वा।

"कथं पुनः सर्वा वागोङ्कारेण सन्त ण्णा" ?

वैदिक्यास्तावदोङ्कारपूर्वकत्वमुक्तम्। लौकिक्या अपि, 'तदादीनि वाक्यानि स्यु'रित्यापस्तम्बवचनात्।

उपनिषद्भाष्ये चैतदन्यथा व्याख्यातम्। तत्त्विहानुपयोगान्न प्रदर्शितम्।

प्राणायामशब्द आचमनवद्विशिष्टेतिकर्तव्यताके प्राणनिरोधे वर्तते। 'परं तपः' चान्द्रायणादिभ्यः। "किं पुनस्तस्य श्रेष्ठ्यम्" ? भक्तिरेषा।

सावित्र्याः परं मन्त्रज्ञानं नास्ति। एषामिति प्रशंसा। मोनात्सत्यं विशिष्यते। मौनं वाङ्नियम उच्यते।

तस्य च यत्फलं ततो धिकं सत्यवचनात्प्राप्यते। सत्यवचने विध्यर्थो पि तथा नुष्ठितो भवति। मौने तु केवलमन तप्रतिषेधानुष्ठानमेव। अर्थवादो यं श्लोकः।।८३।।

**क्षरन्ति सर्वा वैदिक्यो जुहोति-यजति-क्रियाः।**

**अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः।। ८४।।**

**अन्वय** - वैदिक्यो सर्वा जुहोतियजतिक्रियाः क्षरन्ति अक्षरं प्रजापतिश्च ब्रह्म एव दुष्करं ज्ञेयम्।

**हिन्दी अर्थ** - वेदोक्त सब हवन, यज्ञ आदि क्रियायें विनष्ट हो जाती हैं 'ओम्' यह अक्षर और प्रजापति परमात्मा को ही अविनाशी जानना चाहिये।। ८४।।

**मेधातिथिः।** यावन्तः केचन वैदिका 'होमा' अग्निहोत्रादयो, ये च 'यागा' ज्योतिष्टोमादयः, ते सर्वे क्षरन्ति न परिपूर्णफला भवन्ति, फलं वा तदीयं स्रवत्याशु विनश्यति।

अक्षरं त्वेतदोङ्काराख्यमक्षरं ज्ञेयमक्षयफलम्। ब्रह्मीभूतस्य न पुनः संसारापत्तिः। अतो क्षयफलत्वादक्षरमुच्यते। एको क्षरशब्द उद्देश्यः, संज्ञाशब्दो द्वितीयो यौगिकः क्रियाशब्दः। ब्रह्म च तदेव। प्रजापतिश्चोङ्कार एव। स्तुतिरेषा।

जुहोति-यजतीति धातुनिर्देशस्तयोः क्रियाः प्रतिपाद्यार्था यागहोमाः। व्यक्त्यपेक्षं बहुत्वम्। अथवा धात्वर्थनिर्देश एवायं जुहोति-यजतति।' क्रिया'स्तद्व्यतिरिक्ता दानाद्याः द्वन्द्वश्चायम्, 'जुहोतीति यजति च क्रियाश्च'। होमयागौ प्राधान्यात्प थगुपादीयेते।

अत्रोक्ता ॐकारस्य स्तुतिः केवलस्यापि जपविधानार्थेति केचित्। न हि प्रकृतविधिशेषतैवात्र, पुनः परामर्शाभावात्। वैश्वानरे ह्यष्टत्वादीनां "यदष्टाकपालो भवति, गायत्र्या चैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिव तैवा स्मिंस्तेजो दधाति" इति। सर्वत्र वैश्वानरपदापेक्षया तदेकवाक्यत्वे सम्भवति न वाकयभेदकल्पनया विध्यन्तरसम्भवः। इह त्वक्षरं ज्ञेयमिति न पूर्वापेक्षा, नापि सावित्र्यादीनां पुनः परामर्शो स्ति। अतः स्वपदार्थैरेव वाक्यार्थपरिसमाप्तेर्नान्यशेषता। ज्ञेयमित्यत्र कृत्यो विधायकः। ब्रह्मपदेन च सम्बन्धाद्ब्रह्मरूपतया ज्ञेयमुपास्यं भावनीयम्। भाव्यमाने च तस्मिन्मानसजप उक्तो भवति।। ८४।।

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।**

**उपांशुः स्याच्छतगुणः साहस्रो मानसः स्म तः।।८५।।**

**अन्वय** - विधि यज्ञात् जपयज्ञः दशभिः गुणैः विशिष्टः उपांशु शतगुणः स्यात् मानसः साहस्रः स्म तः।

**हिन्दी अर्थ** - विधियज्ञ अर्थात् अमावस्या, पूर्णिमा आदि विशेष उपलक्ष्यों पर किये जाने वाले यज्ञों से जपयज्ञ=स्पष्टोच्चारण पूर्वक जप करना दश गुना विशेष है। उपाशुं=जिसमें धीरे-६ ाीरे ओठों से ही उच्चारण किया जाये, वह सौगुना विशेष है मानसजाप=अर्थ एवं ध्यानपूर्वक मन में किया जाने वाला जप, हजार गुना विशेष है।

**मेधातिथिः।** विधिविषयो यज्ञो विधियज्ञो ज्योतिष्टोमादिः। यत्कर्म यजेतेति चोदितं, बाह्येन व्यापारेण ऋत्विगादिसर्वाङ्गसम्पत्त्या क्रियते स 'विधियज्ञ' इहोच्यते। जपस्तु न यज्ञः, प्रशंसया यज्ञ उपचारेणोच्यते। अतो नासौ विधियज्ञः। स विशिष्टः प्रकृष्टः श्रेष्ठो यज्ञो, ज्योतिष्टोमादेर्दशभिर्गुणैः। महाफलत्वमेतेन जपस्योच्यते। यदेव यागात्फलं तदेव बहुतर जपात्प्राप्यते। न च यागेभ्यः श्रौतेभ्यो जपस्याधिकफलत्वं युक्तम्। तथा हि सति कः शरीरधनपरिक्षयरूपेषु यागेष्वध्यवस्येत् ? तस्मात्प्रशंसैषा। पूर्णाहुत्या सर्वोन्कामानवाप्नोतीतिवत्। एतावदस्यार्थः-तदेव स्वर्गादिफलमवाप्यते, किन्तु लोकवत्प्रयत्नविशेषात् फलपरिमाणविशेषः। अविशेषितत्वात् यज्ञस्य, स्वर्गग्रामपुत्रपश्वादि यस्य यज्ञस्य यत्फलं तत्तज्जपातप्राप्यते।

उपांशुः शतगुणः, यदन्यो न श्र णोति समीपस्थो पि। सहस्रगुणः साहस्रोमानसः मनोव्यापारमात्रेण यश्चिन्त्यते। जपमात्रविषय उपांशुत्वादिगुणः, प्रकृतस्य यो धीतेत्यनेन विच्छेदात्, तेन यः प्रायश्चित्तादौ जपो यः शान्तिको यश्चाभ्युदयिकः सर्वत्रैते गुणाः। सहस्रमस्यास्तीति साहस्रः। गुणानां

प्रकृतत्वात्सहस्त्रगुणसद्भावः प्रतीयते। गुणशब्दश्चावयववचनः। फलभूमा च सम्बन्धादवगम्यते।।८५।।

**ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।**

**सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्।। ८६।।**

**अन्वय** - विधियज्ञसमन्विता ये चत्वारः पाक यज्ञाः ते सर्वे जपयज्ञस्य षोडशीम् कलां नार्हन्ति।

**हिन्दी अर्थ** - विधियज्ञ सहित जो चार पाकयज्ञ (पित यज्ञ, होम, बलिवैश्वदेव और अतिथियज्ञ) ये सब जपयज्ञ की सोलहवीं कला के योग्य भी नहीं है।। ८६।।

**मेधातिथिः।** महायज्ञाः पाकयज्ञा उच्यन्ते, ब्रह्मयज्ञं वर्जयित्वा चत्वारो यज्ञा भवन्ति। 'विधियज्ञा' उक्तास्तैः समन्विताः सहिताः। कलामंशं षोडशीं नार्हन्ति। षोडशेन भागेन न समा भवन्ति। अथवा र्हतिः प्राप्त्यङ्गे मूल्यपणने वर्तते। अर्हशब्दात्तिपं कृत्वा अर्हन्तिरूपम्।। ८६।।

**जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।**

**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते।। ८७।।**

**अन्वय** - ब्राह्मणः जप्येन एव संसिध्येत् अय न संशयः ब्राह्मणः अन्यत् कुर्यात् वा न कुर्यात् मैत्रः उच्यते।

**हिन्दी अर्थ** - ब्राह्मण तो जप के द्वारा ही सिद्धि प्राप्त कर लेता है, इसमें कोई सन्देह नहीं। ब्राह्मण अन्य कुछ विहित (यज्ञ दान आदि) कर्म करे या न करे फिर भी परमात्मा का अतिशय प्रिय कहलाता है।। ८७।।

**मेधातिथिः।** जप्येनैव सिद्धि काम्यफलावाप्तिं ब्रह्मप्राप्तिं वा प्राप्नुयात्। नात्र हृदि शंका कर्तव्या, यत् 'ज्योतिष्टोमादिभ्यो महाप्रयासेभ्यो भावनाभ्यश्च यल्लब्धव्यं तज्जपेन कथं सिध्यती'ति। सिद्ध्यत्येव। कुर्यादन्यत् अनित्यं ज्योतिष्टोमादि। अथवा तदपि न कुर्याद्यतो मैत्रो ब्राह्मण उच्यते। मित्रमेव मैत्रम्। सर्वभूतमैत्रीरतेन ब्राह्मणेन भवितव्यम्। अग्निषोमीयपशुहिंसायां च कुतो मैत्री। अयमर्थवाद एव, न पुनः पश्वङ्गकर्मप्रतिषेधः, पूर्वशेषत्वावगतेः। प्रत्यक्षश्रुतिविहितत्वाच्च तेषाम्। अतिक्रान्तो जपविधिः।। ८७।।

**इन्द्रियाणां विचरतां विषयेष्वपहारिषु।**

**संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम्।। ८८।।**

**अन्वय** - विद्वान् वाजिनाम् यन्ता इव अपहारिषु विषयेषु विचरतां इन्द्रियाणां संयमे यत्नम् आतिष्ठेत्।

**हिन्दी अर्थ** - विद्वान् मनुष्य, घोड़ों के नियामक सारथी के समान, मन को हरने वाले विषयों में विचरने वाली इन्द्रियों को रोकने में यत्न करे।

**मेधातिथिः।** इन्द्रियाणां संयमे यत्नमातिष्ठेदित्येतावाच्छास्त्रार्थः। परिशिष्टो र्थवादः, आसन्ध्योपासनविध ोः। 'संयमः' प्रतिषिद्धेषु विषयेषु प्रव त्तिपरिहारो प्रतिषिद्धेष्वप्यतिसक्तिवर्जनम्। तत्र प्रतिषिद्धपरिहारस्तैरेव प्रतिषेधैः सिद्धः। अप्रतिषिद्धेष्वप्यतिसक्तिनिषेधार्थो यं श्लोकसङ्घातः। एतदेवाह विचरतां विषयेषु वातन्त्र्येण वस्तुशक्त्या प्रवर्तमानानाम्। अपहारिषु विषयेषु- अपहरन्त्याकर्षन्त्यात्मसात्कुर्वन्ति पारतन्त्र्यमापादयन्ति पुरुषं ते अपहारिणो विषया मनोहरा य उच्यन्ते। तत्र विचरतां विविधं विशेषेण चरताम्। यदीन्द्रियाणि विशेषेण न चरेयुरपरिहारिणो पि तदा विषयाः किं कुर्युः। भवन्तु वा निरङ्कुशानीन्द्रियाणि, यदि विषयाः प्रत्याख्यायिकास्ताथा पि सुसंयमः पुरुषेणात्मा। यतस्तूभयं सापराधमतो यत्न आस्थेयो, दुर्नियमानि ह्येतानि।

यन्तेव वाजिनाम्। यन्ता सारथिरश्वानां यथा रथयुक्तानां स्वभावतो विचलनशीलानां संयमे नियमे यत्नं करोति, ते न तदा निच्छया उन्मार्गेण वहन्ति, विधेयतां तस्य भजन्ते, एवमिन्द्रियाणि विधेयीकर्तव्यानि।। ८८।।

**एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः।**

**तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः।। ८६।।**

**अन्वय** - पूर्वे मनीषिणः यानि एकादश इन्द्रियाणि आहुः तानि यथावत् अनुपूर्वशः सम्यक् प्रवक्ष्यामि।

**हिन्दी अर्थ** - पहले मनिषी-विद्वानों ने जो ग्यारह इन्द्रियाँ कही हैं उनको यथोचित क्रम से ठीक-ठीक कहता हूँ।।८६।।

**मेधातिथिः।** सङ्ख्यानिर्देशो यं प्रमाणान्तरगम्यो न शास्त्रार्थः सौहार्देन तु व्युत्पाद्यते। तानि पूर्वे मनीषिण आहुः। परस्तान्नामतः कर्मतश्च वक्ष्यामि। आनुपूर्व्यमनाकुलता। पूर्वग्रहणान्ने तार्किकैरेव व्यवस्था कल्पिता, किन्तु पूर्वेषामप्याचार्याणां स्थितैव। एतामजानन्तो नागमिका इति लोकैरुपहस्यन्ते, इत्यतो यं वेदितव्यः। प्रसिद्धाः पदार्थां व्याख्याताश्च प्राक्।। ८६।।

**श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव प चमी।**

**पायूपस्थं हस्तपादं वाक्चैव दशमी स्म ता।। ९०।।**

**अन्वय** - श्रोत्रं त्वक् चक्षुषी जिह्वा प चमी च नासिका। पायु उपस्थं हस्तपादम् दशमी च वाक् स्म ता।

**हिन्दी अर्थ** - कान, त्वचा, नेत्र, जिह्वा, पाँचवी नाक, गुदा, लिग, हाथ पैर और दशमी वाणी ये दश इन्द्रियाँ हैं।।९०।।

**मेधातिथिः।** श्रोत्रादीनि प्रसिद्धानि। अधिष्ठानभेदाच्चक्षुषी इति द्विवचनम्। अन्यत्र तदाधारायाः शक्तेरेकत्वादेकवचनम्। उपस्थः शुक्रोत्सर्जनः पुंसोरजस्तदाधारश्च स्त्रियाः।

द्वन्द्वनिर्दिष्टयोः 'प्राण्यङ्गत्वादेकवद्भावः' (पा० सू० २।४।२) वाक् ताल्वादिः शब्दाभिव्य जकः शरीरावयवनामनिर्देशो यम्।।९०।।

**बुद्धीन्द्रियाणि प चैषां श्रोत्रादीन्यनुपूर्वशः।**

**कर्मेन्द्रियाणि प चैषां पाय्वादीनि प्रचक्षते।।९१।।**

**अन्वय** - ऐषां अनुपूर्वशः श्रोत्रादीनि प च बुद्धीन्द्रियाणि पाय्वादीनि प च कर्मेन्द्रियाणि प्रचक्षते।

**हिन्दी अर्थ** - इनमें क्रमशः कान आदि पांच ज्ञानेन्द्रिय और गुदा आदि पांच कर्मेन्द्रिय कहाती हैं।। ९१।।

**मेधातिथिः।** कार्यमिदानीमेषामाह स्वरूपावधारणार्थम्। न हि तानि प्रत्यक्षानि। बुद्धीन्द्रियाणि बुद्धेन्द्रियाणि जनकानि कार्यकरणानि। कार्यकरणसम्बन्धे षष्ठी।

श्रोत्रादीन्यनुपूर्वशः। आदिशब्दस्य प्रकारार्थता मा विज्ञायीति अनुपूर्वशः क्रमेणेत्यर्थः। क्रमश्च सन्निवेशापेक्षो भवत्यतः पूर्वश्लोकोक्ता व्यवस्था श्रीयते।

कर्मेन्द्रियाणि। परिस्पन्दात्मकमत्र कर्म विवक्षितम्।। ९१।।

**एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।**

**यस्मिन् जिते जितावेतौ भवतः पु चकौ गणौ।। ९२।।**

**अन्वय** - एकादशं मनः स्वगुणेन उभयात्मकम् ज्ञेयम् यस्मिन् जिते एतौ पु चकौ गणौ जितौ भवतः।

**हिन्दी अर्थ** - ग्यारहवां मन है ऐसा जानना चाहिए। यह अपने गुणों से दोनों प्रकार का है-ज्ञानेन्द्रिय भी और कर्मेन्द्रिय भी। जिस मन के जीतने से पांचो-पांचों इन्द्रियों के दोनों समुदाय ज्ञानेन्द्रिय तथा कर्मेन्द्रिय दोनों जीत लिये जाते हैं।। ९२।।

**मेधातिथिः।** एकादशसङ्ख्यापूरकं मन इन्द्रियाणाम्। स्वो गुणो मनसः संकल्पः। तेनोभयं शुभमशुभं वा संकल्प्यते। अथवा बुद्धीन्द्रियेषु कर्मेन्द्रियेषु स्वविषयप्रव त्तौ संकल्पमूलत्वात् उभयात्मकमुच्यते।

यस्मिं जिते एतौ बुद्धीन्द्रियवर्गः कर्मेन्द्रियवर्गश्च प चकौ प्राक्प्रदर्शितपरिमाणौ जितौ भवतः। तत्त्वाख्यानमेतत्।। ६२।।

**इन्द्रियाणां प्रसङ्गेन दोषम च्छत्यसंशयम्।**

**सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति।। ६३।।**

**अन्वय** - इन्द्रियाणां प्रसङ्गेन असंशयम् दोषं ऋच्छति तानि तु सन्नियम्य एव ततः सिद्धिं नियच्छति।

**हिन्दी अर्थ** - जीवात्मा इन्द्रियों के साथ मन लगाने से निःसन्देह दोषी हो जाता है और उन पूर्वोक्त दस इन्द्रियों को वश में करके ही पश्चात् सिद्धि को प्राप्त होता है।। ६३।।

**मेधातिथिः।** प्रसङ्गः तत्परता। तेन हेतुभूतेन दोषं द ष्टमद ष्टं च ऋच्छति प्राप्नोति। नात्र संशयो निश्चितमेतत्।

सन्नियम्य तानीन्द्रियाणि ततः सिद्धिमभिप्रेतार्थावाप्तिं श्रौतस्मार्तकर्मणामनुष्ठानफलं निःशेषं गच्छति प्राप्नोति।।६३।।

**न जातु कामः कामानामुपभोगेन शाम्यति।**

**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।। ६४।।**

**अन्वय** - कामः कामानाम् उपभोगेन न जातु शाम्यति (अपितु) हविषा कृष्णवर्त्मेव भूय एव अभिवर्धते।

**हिन्दी अर्थ** - कामना विषयों के उपभोग से कभी शान्त नहीं होती किन्तु घ त डाली हुई अग्नि के समान ओर अधिक बढ़ती जाती है।। ६४।।

**मेधातिथिः।** तिष्ठतु तावद्विषयाभिलाषः, शास्त्रोपदेशान्न क्रियते किन्तु द ष्टमेव सुखं तावन्निव त्तेर्भवति। तथाहि सेव्यमाना विषया अपि अधिक गर्द्धमुत्पादयन्ति उदरपूरं भुक्तवतस्त प्तस्यातिसौहित्यमपि गतवतो भवति हृदयसमीहा 'किमिति न शक्नोमि अन्यद्भोक्तुम्' अशक्त्या तु न प्रवर्तते। ततो नैषा भोगेन शक्या निव त्तिर्न कदाचित्कामो भिलाषः कामानां काम्यमानानां स्प हणीयानामर्थानामुपभोगेन सेवया शाम्यति निवर्तते। भूयो धिकतरं वर्धते। हविषा घ तेन कृष्णवर्त्मा ग्निरिव।

दुःखरूपश्चाभिलाषः। अनुपभुक्तरसस्य त्वभिलाषानुत्पत्तिः। तत्त्वप्रसङ्ख्यानमेतत्। उक्त च "यत्प थिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्"।। ६४।।

**यश्चैतान्प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत्।**

**प्रापणात्सर्वकामानां परित्यागो विशिष्यते।। ६५।।**

**अन्वय** - यः एतान् सर्वान् प्राप्नुयात् यश्च एतान् केवलान् त्यजेत् सर्वकामानां प्रापणात् परित्यागो विशिष्यते।

**हिन्दी अर्थ** - जो इन सब इच्छाओं या सब विषयों का उपभोग करे और जो इन सब को त्याग दे (इन दोनों बातों में) सब इच्छाओं या विषयों को सर्वथा त्याग देना अधिक अच्छा है।।६५।।

**मेधातिथिः।** पूर्वोक्तं हेतुत्वेनोपजीव्यायं निगमनश्लोकः पठितः। यदासेवया वर्धते कामः अतो य एतान्कामान्कामी सर्वान्प्राप्नुयात्सेवेतानेकमण्डलेश्वर इव तरुणः, यश्चैतांस्त्यजति केवलानि ईषदपि न स्प शति नैष्ठिक एव बालः। तयोर्यः प्रापको भोक्ता तस्मात्स विशिष्यते। अतिशयेन श्रेष्ठो भवति यः परित्यजेदिति। एतच्चात्मप्रत्यक्षम्।। ६५।।

**न तथैतानि शक्यन्ते सन्नियन्तुमसेवया।**

**विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः।। ६६।।**

**अन्वय** - विषयेषु प्रजुष्टानि एतानि असेवया तथा सन्नियन्तुं न शक्यन्ते नित्यशः ज्ञानेन।

**हिन्दी अर्थ** - विषयों में आसक्त इन इन्द्रियों को विषयों के सेवन के बिना वैसे आसानी से वश में नहीं किया जा सकता जैसे कि नित्यप्रति ज्ञानपूर्वक वश में किया जा सकता है।।६६।।

**मेधातिथिः।** यद्येवमरण्यवास एव तर्हि प्राप्तम्। न हि तत्र विषयाः सन्निधीयन्ते। असन्निहिताश्च न सेविष्यन्ते। तदर्थमाह-नासेवया इन्द्रियाणि नियन्तव्यानीति निःसुखम् स्यात्। अथ च स्मरन्ति न पूर्वाह्णमध्यन्दिनापराह्णाफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः। न च शरीरधरणसेवया भवति। किं तु गर्द्धनिषेधो यमुच्यते। स च गर्द्धः - सत्यामपि सेवायां - ज्ञानेनं-विषयगत-दोषज्ञानेन- अस्थिस्थूणं स्नायुयुतमित्यादिशास्त्रोक्तेन, स्वसंविदा च विपाकविरसतया, किं विपाकफलसेवादिदोषभावनया वैराग्याभ्यासेन क्रमेण स्प हा निवर्तते। न तु सहसैव त्यक्तुं शक्यते। किन्तु नित्यशः नित्यकालं, ज्ञानविशेषणमेतत्।

'प्रदुष्टानि' प्रव त्तानि। दोषवत्त्वात् प्रव त्तान्येव प्रदुष्टान्युच्यन्ते।

अयं शस्तत्र तत्र नित्यशः अनुपूर्वशः सर्वशः पूर्वश इति व्यासमनुप्रभ तिभिर्महानमुनिभिः प्रयुज्यते। तस्य साधुत्वे यत्नः कर्तव्यः। तत्र शस्विधौ। "एकवचनाच्च वीप्सायामिति" (व्या० सू० ५।४।४३) पठ्यते। तत्र वीप्सार्थः कथचित् द्योतयितव्यः। अन्ये तु शसस्तिष्ठत्यर्थस्य क्विपि रूपं वर्णयन्ति। क्रियाविशेषणं चैतत् नपुंसकम्। नित्यस्थितेन ज्ञानेनेत्यर्थः।। ६६।।

**वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।**

**न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्।। ६७।।**

**अन्वय** - विप्रदुष्टभावस्य वेदाः त्यागः यज्ञाश्च नियमाः तपांसि च कर्हिचित् सिद्धिं न गच्छति।

**हिन्दी अर्थ** - जो अजितेन्द्रिय दुष्टाचारी पुरुष है, उस पुरुष के वेद पढ़ना, त्याग करना, यज्ञ करना, नियम आदि का पालन करना, तप अर्थात् निन्दास्तुति और हानि-लाभ आदि द्वन्द्व का सहन करना आदि कर्म कदापि सिद्ध नहीं होते।। ६७।।

**मेधातिथिः।** अयमत्र विधिरेव। वेदास्तद्विषयमध्ययनजपादि। त्यागो दानं लक्षणया। अथवा प्रतिषिद्धस्यापि मधुमांसभक्षणादेर्निव त्तिः फलदेत्यनेन वर्जनम्। विप्रदुष्टो भावश्चित्तं यस्य तस्य। सिद्धिं न गच्छन्ति फलसाधकानि न भवन्ति, कस्मिंश्चिदपि काले। अतो नुष्ठानकाले नाभिप्रेतादिगतमानसेन भवितव्यम्। शक्यं तर्हि सर्वेतरविकल्पतिरस्कारेण कर्मणि मन आधेयम्।

अङ्गं हि कर्मसु विषयचिन्तात्यागो नेन वाक्येन विहितः। तदभावे कर्मनैष्फल्यं स्यात्। एष हि भावदोषो यत्कर्मानुष्ठाने प्रव त्तस्य तत्परतात्यागेन व्यसनेषु मनो वधानम्।। ६७।।

**श्रुत्वा स्प ष्ट्वा च द ष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।**

**न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः।। ६८।।**

**अन्वय** - यः नरः श्रुत्वा स्प ष्ट्वा, द ष्ट्वा च भुक्त्वा घ्रात्वा च न हृष्यति (न) वा ग्लायति स जितेन्द्रियः विज्ञेयः।

**हिन्दी अर्थ** - जो मनुष्य सुनकर के, स्पर्श करके, देखकर के, खाकर और सूंघ करके न प्रसन्न होता और ना ही उदास होता है उसे जितेन्द्रिय समझना चाहिए।। ६८।।

**मेधातिथिः।** श्रुत्वा वंशगीतादिध्वनि, 'त्वं ब हस्पति'रित्यादिवचनं श्रुत्वा-न हृष्यति। रूक्षपरुषाक्रोशवाचः श्रुत्वा न ग्लायति न मनोदुःखं भजते। ग्लानिः खेदः। स्प ष्ट्वा राङ्कवकौशेयादिवस्त्रं अजलोमकृत च समत्वेनानुभवति। एवं सुवेषतरुणीजननटप्रेक्षासु शत्रुदर्शने च समः। बहुघ तं क्षीरषष्टिकां कोद्रवांश्च समं भोजने। देवदारुतैलं कर्पूरादि च तुल्यं जिघ्रतः। तथा कर्तव्यं यथा केवलैर्मानसैः सुखदुःखैर्न स्प श्यते। एवं तेन जितानीन्द्रियाणि भवन्ति। न त्वप्रव त्त्येव। इयत्पर्यैन्तः संयमः आश्रयणीयः।।६८।।

**इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।**

**तेनास्य क्षरति प्रज्ञा द तेः पादादिवोदम्।। ६६।।**

**अन्वय** - सर्वेषां इन्द्रियाणां तु एकं इन्द्रियं क्षरति तेन द तेः पादात् उदकमिव अस्य प्रज्ञा क्षरति।

**हिन्दी अर्थ** - सब इन्द्रियों में यदि एक भी इन्द्रिय अपने विषय में आसक्त रहने लगती है तो उसी के कारण इस मनुष्य की बुद्धि ऐसे नष्ट होने लगती है जैसे चमड़े के बर्तन=मशक में छिद्र होने से सारा पानी बहकर नष्ट हो जाता है।।६६।।

**मेधातिथिः।** "ननु च ब्रह्मचारिणा स्त्रीसम्बन्धो यत्नेन वर्ज्यः, संस्कृतभिक्षालाभस्तु किमिति निषिध्यते।" अत आह। निर्धारणे षष्ठी। एकमेव यदीन्द्रियं क्षरति स्वातन्त्र्येण स्वविषये वर्तमानं न निवार्यते। ततो स्य क्षरति प्रज्ञा धैर्यमिन्द्रियान्तरविषयमपि। द तिश्छागादिचर्मोदकाद्याहरणभाजनं, तस्य संव तेष्वपीतरेषु यद्येकस्मादुदकं पादात्स्रवति, सर्वं रिच्यते। ज्ञानाभ्याससम्भ तं धैर्य सम्यक्ज्ञानमेव वा। विग ध्न तया तद्गतमानसस्य न तत्त्वतो युक्तिशास्त्रगम्या अर्थाः सम्यक् प्रतिभासन्ते।। ६६।।

**वशे कृत्वेन्द्रिग्रामं संयम्य च मनस्तथा।**
**सर्वान्संसाधयेदर्थानक्षिण्वन् योगतस्तनुम्।। १००।।**

**अन्वय** - इन्द्रिग्रामम् वशे कृत्वा मनः संयम्य तथा योगतः तनुं अक्षिण्वन् सर्वान् अर्थान् संसाधयेत्।

**हिन्दी अर्थ** - पांच कर्मेन्द्रिय, पांच ज्ञानेन्द्रिय (इन दश इन्द्रियों के समूह को) वश में करके और मन को रोक कर तथा युक्ताहार विहार रूप योग से शरीर की रक्षा करता हुआ सब अर्थों को सिद्ध करे।। १००।।

**मेधातिथिः।** उपसंहरति। सत्यपीन्द्रियत्वे मनसः प्राधान्यात्प थगुपादानम्। ग्रामः सङ्घातः। विधेयीकृत्येन्द्रियाणि तथा मनः। सर्वानर्था श्रौतस्मार्तकर्मसाध्यान्संसाधयेन्निष्पादयेत्। तनुं शरीरमक्षिण्वन्नपीडयन्।

योगतः युक्त्या। सहसा कस्यचित्कठिनासनकृष्णाजिनादिप्रावरणात् पीडा भवति सुकुमारप्रकृतेः, तदर्थमिदमुच्यते। येषां सुशीलितं सुसंस्कृतं भोजनं म दुशय्यादि, न तैः सहसा तत्त्यक्तव्यमपि तु क्रमेण सात्म्यतामानेतव्यं तद्विपरीतम्। 'योगः' क्रमेण प्रव त्तिरुच्यते। तत्र च योगतो वशे कृत्वेति सम्बन्धः। यथास्थानमेव वा योगत इति योजनीयम्। युक्त्या औचित्यतः शरीरं नापनयेत्। तदुचितं शरीरस्य न तज्झटिति निवर्तयेत्। तात्पर्य वा 'योगः'। त तीयार्थे तसिः। तात्पर्येण शरीरं रक्षेत्।। १००।।

**पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमर्कदर्शनात्।**
**पश्चिमां तु सदा सीत सम्यग क्षविभावनात्।। १०१।।**

**अन्वय** - पूर्वां सन्ध्यां अर्कदर्शनात् पश्चिमां सावित्र्रीं जपन् तिष्ठेत् तु सदा सीत सम्यग क्षविभावनात् समासीनः (भवेत्)।

**हिन्दी अर्थ** - प्रातःकालीन सन्ध्या के समय सूर्योदय तक गायत्री का जप करता हुआ बैठा रहे। सायंकालीन सन्ध्या में तारे निकलने तक (गायत्री जपता हुआ) बैठा रहे।। १०१।।

**मेधातिथिः।** सम्मुखे प्रातः 'पूर्वा' सन्ध्या आदित्यास्तमये 'पश्चिमा'। तां तिष्ठेत् जपन्सावित्रीम्। आसनादुत्थाय निव त्तगतिरेकत्र देशे स्यात्। सावित्री उक्तैव-'तत्सवितुर्वरेण्यमिति'। तस्या ह्यनुवादः। ओंकारादिविधिः श्लोके सन्ध्याजपार्थ 'एतदक्षरमेतां चेति'। आ र्कदर्शनादिति।। यावद्भगवानादित्यो द ष्टः। जपस्थानयोरयमेव विनिर्देशः।

"ननु किमवधिना अर्कोदय एव सन्ध्या निवर्तते। तथाहि। 'न सर्व तमः क्षीणं नापि परिपूर्णः प्रकाश एषा सन्ध्या'। उक्तं च 'दिवि प्रकाशो भुवि चान्धकारः कालः स सावित्र इति प्रदिष्टः।' निरुक्ते प्युक्तं 'अधोभागः सावित्र' इति। पशुसमाम्नाये विज्ञायते 'कस्मात्सामान्यदधस्ताद्रामो धस्तात्कृष्ण' इति। आदित्योदये च सर्वतस्तमो निवर्तते। उभयर्मानिव त्तौ च सन्ध्या-रात्रिधर्मे र्धमै च। अत्यन्तसंयोगे चैषा द्वितीया सन्ध्यामिति। तेन यावत्सन्ध्याकालं तिष्ठेदित्युक्तं भवति। ततः परं स्वातन्त्र्यं स्थितमेव।"

केचिदाहुध्यायमत्यन्तसंयोगे द्वितीया, किं तर्हि ? "कालश्चाकर्मकाणां कर्मसंज्ञो भवतीति" वार्तिककारस्तत्र

**अन्वय** - गुरुपत्न्या अभ्य जनम् स्नापनम् गात्रोत्सादनमेव, केशानां प्रसाधनम् च न कार्याणि।

**हिन्दी अर्थ** - गुरुपत्नी के उबटन लगाना, स्नान कराना और शरीर दबाना, बालों को संवारना ये कार्य नहीं करने चाहिए।।२११।।

**मेधातिथिः**। घ ततैलादिना केशकायोपदेहनमभ्य जनम्। गात्राणासमुत्सादनमुद्धर्तनम्। कार्यसामान्यात्पादधावनमपि। सर्वथा शरीरस्पर्शसाध्या या काचिद्नुव त्तिः। सा सर्वा प्रतिषिध्यते। वक्ष्यति च हेतुं "स्वभाव एष नारीणाम्" इति (श्लो० २१३)। केशानां च प्रसाधनम् विन्यासरचनादिकरणम्, कुङ्कुमसिन्दूरादिना सीमन्तोत्थापनं। प्रदर्शनार्थं चैतदुक्तम्। तेन देहप्रसाधनमपि चन्दनानुलेपनानि निषिध्यन्ते।। २११।।

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः।।**
**पूर्णविंशतिवर्षेण गुणदोषौ विजानता।। २१२।।**

**अन्वय** - पूर्णविंशतिवर्षेण गुणदोषौ विजानता युवतिः गुरुपत्नी पादयोः नाभिवाद्या।

**हिन्दी अर्थ** - जिसके बीस वर्ष पूर्ण हो चुके हों ऐसे गुण और दोषों को समझने में समर्थ युवक शिष्य को जवान गुरुपत्नी का चरणों का स्पर्श करके अभिवादन नहीं करना चाहिए।।२१२।।

**मेधातिथिः**। पूर्णविंशतिवर्षेण तरुणेनेत्यर्थः। बालस्य आ षोडशाद्वर्षाददोषः। पूर्णानि विंशतिवर्षाण्णि यस्य स एवमुच्यते। अयं कालो यौवनोद्भेदोपलक्षणार्थः। अत एवाह गुणदोषौ विजानता। कामजे सुखदुःखे गुणदोषावभिप्रेतौ स्त्रीगतौ च स्वीकृतिदुराकृतिलक्षणौ धैर्यचापले वा। सर्वथा तन्त्रा विंशतिसंख्या।। २१२।।

**स्वभाव एष नारीणां नराणामिह दूषणम्।**
**अतो र्थान्नप्रमाद्यन्ति प्रमदासु विपश्चितः।। २१३।।**

**अन्वय** - इह एषः स्वभावः नारीणां नराणां दूषणम् अतः अर्थात् विपश्चितः प्रमदासु न प्रमाद्यन्ति।

**हिन्दी अर्थ** - इस संसार में यह स्वाभाविक ही है कि स्त्री-पुरुषों का परस्पर के संसर्ग से दूषण हो जाता है=दोष लग जाता है, इस कारण बुद्धिमान् व्यक्ति स्त्रियों के साथ व्यवहारों में कभी असावधानी नहीं करते अर्थात् ऐसा कोई बर्ताव नहीं करते जिससे सदाचार के मार्ग से भटक जाने की आशंका हो।। २१३।।

**मेधातिथिः**। एषा प्रकृतिः स्त्रीणां यन्नराणां धैर्यच्यावनम्। सङ्गाद्धि स्त्रियः पुरुषान्व्रतात् च्यावयेयुः। अतो र्थात् अस्माद्धेतोः न प्रमाद्यन्ति। दूरत एव स्त्रियः परिहरन्ति। प्रमादः स्पर्शादिकरणम्। वस्तुस्वभावो यं यत्तरुणी स्प ष्टा कामकृतं चित्तसंक्षोभं जनयति। तत्र चित्तसंक्षोभो पि प्रतिषिद्धः, तिष्ठतु तावदपरो ग्राम्यधर्मसंरम्भः। प्रमदाः स्त्रियः।। २१३।।

**अविद्वांसमलं लोके विद्वांसमपि वा पुनः।।**
**प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्।। २१४।।**

**अन्वय** - हि लोके प्रमदाः कामक्रोधवशानुगम् अविद्वांसनम् लोके विद्वांसमपि वा उत्पथं नेतुं अलम्।

**हिन्दी अर्थ** - क्योंकि संसार में स्त्रियां काम और क्रोध के वशीभूत होने वाले अविद्वान् को अथवा विद्वान् व्यक्ति को भी उसके मार्ग से उखाड़ने में अर्थात् उद्देश्य से पथभ्रष्ट करने में पूर्णतः समर्थ हैं।। २१४।।

**मेधातिथिः**। न चैतन्मन्तव्यं 'नियमितानि येन चिरमिन्द्रियाणि, 'अतिगुरुपातकं गुरुदारेषु दुष्टेन भावेन प्रेक्षणमपीति' य एवं वेद तस्य न दोषः पादस्पर्शादाविति।" यत एवंविधानपि दोषान् यो जानीते, यो वा न कि चिज्जानीते, तो स्त्रीविषये समानौ। यतो नात्र विद्वत्ता प्रभवति। शक्नुवन्ति स्त्रियः सर्वम् उत्पथम् अमार्गं लोकशास्त्रविरुद्धं विषयं नेतुं प्रापयितुं-कामक्रोधवशानुगं सन्तम्। कामक्रोधाभ्यां यः सम्बन्ध्यत इत्यर्थः। अवस्थाविशेषापलक्षणार्थं चैतत्। अत्यन्तबालं अत्यन्तव द्धं च प्राप्तयोगप्रकर्षणं

च वर्जयित्वा, येन निरन्वयमुच्छिन्नाः संसारपुरुषधर्मास्तद्व्यतिरेकेण, न कश्चित्पुरुषो स्ति यः स्त्रीभिर्नाकृष्यते-अयःकान्तेनेव लोहः। न चात्र स्त्रीणां प्रभविष्णुताः; वस्तुस्वाभाव्यात्तरुणीजनदर्शने पुंसामुन्मथ्यते चित्तम्, विशेषतो ब्रह्मचारिणाम्।। २१४।।

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति।। २१५।।**

**अन्वय** - माता स्वस्रा दुहित्रा वा विविक्तासनः न भवेत् बलवानिन्द्रियग्रामः विद्वांसमपि कर्षति।

**हिन्दी अर्थ** - माता, बहन अथवा पुत्री के साथ भी एकान्त आसन पर न बैठे या रहे, अर्थात् एकान्तनिवास न करे क्योंकि शक्तिशाली इन्द्रियां विद्वान् व्यक्ति को भी खींचकर अपने वश में कर लेती हैं।। २१५।।

**मेधातिथिः।** अतो विविक्तासनः निर्जने शून्ये ग हादौ नासीत। नापि निःशङ्कमङ्गस्पर्शादि कुर्यात्। अतिचपलो हीन्द्रियसङ्घातो विद्वांसमपि शास्त्रानिग हीतात्मानमपि कर्षति हरति परतन्त्रीकरोति।। २१५।।

**कामं तु गुरुपत्नीनां युवतीनां युवा भुवि।**
**विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन्।। २१६।।**

**अन्वय** - कामं तु युवा युवतीनां गुरुपत्नीनाम् असौ अहम् इति ब्रुवन् विधिवत् भुविवन्दनं कुर्यात्।

**हिन्दी अर्थ** - अच्छा तो यही है कि युवक शिष्य जवान गुरुपत्यिों को 'यह मैं अमुक नाम वाला हूँ' ऐसा कहते हुए पूर्णविधि के अनुसार भूमि पर झुककर ही अभिवादन करे।। २१६।।

**मेधातिथिः।** काममित्यरुचिं सूचयति। उत्तरेण चैतत्सम्बन्ध्यते 'विप्रोष्य पादग्रहणमिति।' भुवि तु पादवन्दनमिष्यत एव। युवतीनां युवा द्वयोर्यूनोरयं विधिः। यदि बालो ब्रह्मचारी व द्धा वा गुरुपत्नी तदा पादोपसंग्रहणमविरुद्धम्। असावहमिति प्रागुक्तस्य विधेरनुवादः। विधिवदिति व्यस्तपाणिना।। २१६।।

**विप्रोष्य पादग्रहणमन्वहं चाभिवादनम्।**
**गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्।। २१७।।**

**अन्वय** - सतां धर्मम् अनुस्मरन् गुरुदारेषु अन्वहम् अभिवादनम् विप्रोष्य च पादग्रहणं कुर्वीत्।

**हिन्दी अर्थ** - शिष्य श्रेष्ठों के धर्म को स्मरण करते हुए अर्थात् यह विचारते हुए कि स्त्रियों को अभिवादन करना शिष्ट व्यक्तियों का कर्त्तव्य है, गुरुपत्नियों को प्रतिदिन अभिवादन करे और परदेश से लौटकर चरणस्पर्श करे।। २१७।।

**मेधातिथिः।** प्रवासादेत्य पादयोर्ग्रहणं 'सव्येन सव्य' इति। अन्वहम् अहन्यहनि। अभिवादनं भूमौ। सतां शिष्टानां एष धर्म आचार इत्यनुस्मरन्।। २१७।।

**यथा खनन् खनित्रेण नरो वार्यधिगच्छति।**
**तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति।। २१८।।**

**अन्वय** - यथा खनित्रेण खनन् नरः वार्यधिगच्छति तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति।

**हिन्दी अर्थ** - जैसे फावड़े से खोदता हुआ मनुष्य जल को प्राप्त करता है वैसे गुरु की सेवा करने वाला शिष्य गुरुजनों ने जो विद्या प्राप्त की है, उसको प्राप्त होता है।। २१८।।

**मेधातिथिः।** सर्वस्य शुश्रूषाविधेः फलमिदम्। गुर्वाराधनद्वारेण स्वाध्यायविध्यर्थवाद।

यथा कश्चिन्मनुष्यः खनित्रेण कुद्दालादिना भूमि खनन् वारि प्राप्नोति, नाक्लेशेन, एवमयं विद्यां गुरुगतां शुश्रूषुः गुरुसेवापरो धिगच्छति।।२१८।।

**मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः।**
**नैनं ग्रामे भिनिम्लोचेत्सूर्यो नाभ्युदियात् क्वचित्।। २१६।।**

**अन्वय** - मुण्डः वा जटिलः वा स्यात् अथवा शिखाजटः स्यात् एनं क्वचित् ग्रामे सूर्य न अभिनिम्लोचेत् नाभ्युदयात्।

**हिन्दी अर्थ** - ब्रह्मचारी चाहे मुंडी हो, चाहे जटी हो या शिखी, इस ब्रह्मचारी को ग्राम में रहते सूर्य न तो अस्त हो न कभी उदय हो।।२१६।।

**विशेष** - अभिप्राय यह है कि ब्रह्मचारी को रात्रिवास गुरुकुल में ही करना है। अतः भिक्षा आदि कार्यों के लिए उसे ग्राम आदि में सूर्योदय के बाद जाना चाहिए और सूर्यास्त पूर्व लौट आना चाहिए।। २१६।।

**मेधातिथिः।** मुण्डः सर्वतः केशवपनं कारयेत्। जटिलो वा। जटा परस्परमत्यन्तं संलग्नकेशाः, तद्वान् जटिलत। शिखाजटः शिखैव वा जटा यस्य। जटाकारां शिखां धारयेत् परिशिष्टे मुण्डः।

तथा च कुर्याद्यथा ग्रामे स्थितस्य सूर्यो नाभिनिम्लोचेत नास्तं गच्छेत्। ग्रामग्रहणं नगरस्यापि प्रदर्शनार्थम्। अस्तमयसमयामरण्ये सम्भावयेत्, एवं ग्रामे नाभ्युंदियादुदयो पि सूर्यस्य यथा रण्यस्थस्य ब्रह्मचारिणो भवति तथा कुर्यात्। एवं प्रकृतं ब्रह्मचारिणम्!।

अन्ये तु ग्रामशब्दं 'ग्राम्येषु धर्मेषु, स्वापादिषु वर्तमानं न निम्लोचेत्' इत्येवमर्थं वर्णयन्ति। तथा च उत्तरत्र, 'शयानम्' इत्याह। ततो यं सन्ध्ययोः स्वप्नप्रतिषेधः, नारण्ये तत्कालावस्थानम्। बालो हि ब्रह्मचारी बिभियात्। गौतमेन तु (अ० २ सू० ६।१०) बहिःसन्ध्यत्वं परतो गोदानादुक्तम्। गोदानव्रतं च षोडशवर्षे, तदा च प्राप्तः शक्नोत्यरण्ये सन्ध्यामुपासितम्।।२१६।।

**ते चेदभ्युदियात्सूर्यः शयानं कामचारतः।।**

**निम्लोचेद्वा प्यविज्ञानाज्जपन्नुपवसेद्दिनम्।। २२०।।**

**अन्वय** - तं चेत् कामचारतः शयानम् सूर्यः अभ्युदियात् अपि वा अविज्ञानात् निम्लोचेत् दिनं जपन् उपवसेत।

**हिन्दी अर्थ** - यदि उसे इच्छानुसार सोते हुए सूर्य का उदय हो जाये अथवा अनजाने में या प्रमाद के कारण सूर्य अस्त हो जाये तो दिन भर गायत्री का जप करते हुए उपवास करे=खाना न खाये।। २२०।।

**मेधातिथिः।** अत्रेदं प्रायश्चित्तं चरेत्।

ब्रह्मचारिणं शयानं निद्रावशं गतम् अभ्युदियात् स्वेनोदयेनाभिव्याप्तदोषं कुर्यात्। 'अभिरभाग' (पा० १।४।७१) इति कर्मप्रवचनीयत्वम्। ततो द्वितीया। शयानमिति। इत्थंभूतं सुप्तमिति लक्षणं वा स्वापकाले य़द्युद्येत जपन्नुपसेद्दिनम्। केचिदाहुः "प्रातरतिक्रमे दिनं जपोपवासौ, रात्रौ तु भोजनम्, पश्चिमातिक्रमे तु रात्रौ जपोपवासौ, प्रातर्भोजनमिति। दिनशब्दः प्रदर्शनार्थः" गौतमवचनं पाप्युदाहरन्ति। "तिष्ठदहरभु जानो भ्यस्तमितश्च रात्रि जपन्सावित्रीमिति।" (गौ०सू० २३।२१)। तदयुक्तम्। उभयत्रापि दिवैव प्रायश्चित्तं युक्तम्। दिनशब्दस्य प्रदर्शनार्थत्वं प्रमाणाभावात्। न ह्यस्य तत्सापेक्षस्य स्वार्थप्रतिपादनम्। निरपेक्षं चैतत्। तस्माद्विकल्पो युक्तः। तत्र यस्य सर्वां रात्रिं जाग्रतो न व्याधिः प्रवर्तते स रात्रौ जपिष्यति, अन्यस्तु दिवैव।

जपश्च गौतमवचनात्सावित्र्या एव। "नन्वत्र कथं गौतमः प्रमाणीक्रियते ?" उच्यते। सापेक्षमिदं वाक्यं जपेदिति, जपनीयस्यानिर्देशात्। सत्यामपेक्षायां श्रुत्यन्तदाद् युक्ता विशेषावगतिः। इह तु कालस्य निर्देशः। नास्ति कालान्तरं प्रत्यपेक्षेति न गौतमो पेक्ष्यते। अथवा सन्ध्यातिक्रमे प्रायश्चिताभिधानात्सावित्रीजपः सिद्ध एव। युक्तं च-सावित्र्यास्तु परं नास्तीति। कामचारतः। ज्ञात्वैव सन्ध्याकाले यः स्वपिति। अविज्ञानात्। चिरसुप्तस्य न्ध्यिाकालो यं वर्तत इत्यनवबोधो विज्ञानम्। एतदुक्तं भवति। इच्छया प्रमादकृते चातिक्रमे एतदेव प्रायश्चित्तम्। यः पुनरभ्युदितानस्तमित-सन्ध्यामतिक्रामति तस्य प्रायश्चितमभोजनं-नित्यानां कर्मणां समतिक्रम इति। अथवा यः कामचारेण शास्त्रातिक्रमणं करोति तस्य तदविज्ञानमेव।।२२०।।

**सूर्येण ह्यभिनिर्मुक्तः शयानो भ्युदितश्च यः।**

**प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा।। २२१।।**

**अन्वय** - यः सूर्येण अभिनिर्मुक्तः शयानाश्च अभ्युदितः प्रायश्चित्तं अकुर्वाणो महतैनसा युक्तः स्यात्।

**हिन्दी अर्थ** - जो प्रमाद से सूर्य के अस्त हो जाने पर और सोते-सोते सूर्य उदय होने पर प्रायश्चित नहीं करता है वह बड़े अपराध का भागी बनता है।। २२१।।

**विशेष** - अभिप्राय यह है कि ऐसी अवस्था में उसे बड़ा दोषी माना जायेगा, क्योंकि संध्याकालों में ब्रह्मचारी के लिये परमावश्यक कर्म संध्योपास है और इस कर्म में प्रमाद करने से ब्रह्मचारी के पापों में फंसने का भय रहता है।। २२१।।

**मेधातिथिः।** पूर्वप्रायश्चित्तविधेरयमर्थवादः। निम्लोचनेनाभिदुष्टः अभिनिम्लुक्तः। एवमभ्युदितः। प्रायश्चित्तं पूर्वोक्तं न करोति। तदा महता पापेन सम्बध्यते, न स्वल्पेन। नरकादिदुःखोपभोगानिमित्तमदुष्टं 'पाप'मुच्यते।। २२२।।

**आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।।**

**शुचौ देशे जप जप्यमुपासीत यथाविधिः।।२२२।।**

**अन्वय** - नित्यं उभे सन्ध्ये शुचौ देशे आचम्य प्रयतः समाहितः यथाविधिः जप्यं जपन् उपासीत्।

**हिन्दी अर्थ** - ब्रह्मचारी प्रतिदिन प्रातः और सायं दोनों संध्याकालों में शुद्ध स्थान में आचमन करके प्रयत्नपूर्वक एकाग्र होकर यथाविधि परमेश्वर का जप करते हुए उपासना करे।। २२२।।

**मेधातिथिः।** एवं महान्दोषो भ्युदयनिम्लोचनयोः। तस्मात् आचम्य। प्रयतः तत्परः। समाहितः परिहृतचित्तकर्मविक्षेपः। शुचौ देशे जप जप्यं प्रणवव्याहृतिसावित्र्याख्यम्। उपासीत उभे सन्ध्ये। सन्ध्ययोरेवात्रोपास्यत्वम्। उपासनं च तत्र भावविशेषः। अथवोभे सन्ध्ये प्रत्युपासीत भगवन्तं सवितारम्। मंन्त्रो हि तद्देवत्यो तस्तमेवोपासीत। संहृतसकलविकल्पस्तद्गतैकमना भवेत्। प्रागुक्तस्य विधेः शेषो नुवादः। उपासनं केवलं विधेयम्। अन्ये तु "शुचौ देश इत्येतद्विध्यर्थो यं श्लोक" इत्याहुः। तेषां पौनरुक्त्यम्। सर्वस्यैव कर्तव्यस्य "शुचिना कर्म कर्तव्य"-मिति विहितम्। अशुचिदेशसम्बन्धे च का शुचिता ?।। २२२।।

**यदि स्त्री यद्यवरजः श्रेयः कि चित्समाचरेत्।**

**तत्सर्वमाचरेद्युक्तो यत्र चास्य रमेन्मनः।। २२३।।**

**अन्वय** - यदि स्त्री यद्यवरजः कि चित् श्रेयः समाचरेत् तत् सर्व आचरेत् यत्र वा अस्य मनः रमेत् (तत् समाचरेत्)।

**हिन्दी अर्थ** - यदि कोई स्त्री अथवा शूद्र भी कोई श्रेष्ठ कार्य करे उनसे शिक्षा लेकर उस पर आचरण करना चाहिए अथवा जिस शास्त्रोक्त कर्म में इसका मन रमे उस श्रेष्ठ कार्य को करता रहे।। २२३।।

**मेधातिथिः।** यदि स्त्री आचार्याणी। अवरजः कनीयान्। आचार्यादुपलभ्य श्रेयः धर्मादित्रिवर्गं समाचरेत्तत्सर्वमाचरेत्। सम्भवति हि तयोस्तदाचार्यसम्पर्कात्परिज्ञानम्। शूद्रो वा चार्यभ तक अवरजः स यद्युपदिशेत् 'एवं पायुलिङ्गौ म द्वारिणा प्रक्षाल्येते, निपुणौ हस्तौ प्रक्षालय, विस्म तेस्ते म द्वारिक्रमः, त्वदीय आचार्यो सकृन्मया पायुप्रक्षालने जलं ददता द ष्टपूर्वः, पूर्वमद्भिः शोचं करोति ततो म द्भिः' इत्येवमादि समयचरेत्तत्समाचाराद्युपपन्न उपदिशेत्। तथा चाचार्याणी आचमनं शिक्षयेत्। तत्सर्वमाचरेद्युक्तः श्रद्धया। न स्त्रीशूद्राचरितमित्यवजानीत। समाचरेदिति च समाचारपूर्वक उपदेश एवात्राभिप्रेतः। वक्षयति च "धर्मः शौचं...समादेयानि सर्वतः" इति (२४०)। आचार्येणैव कदाचिदादिष्टं भवति-ब्राह्मणि आचमय पुत्रस्थानीयमेतं यथाविधिपूर्वकम्'-ब्रूयाच्च 'अस्य मूत्रपुरीषशुद्ध्यर्थं म द्वारिणी देये' इति। तत्र तदीयवचनमनुष्ठेयम्-एवं म दो ग हाण, एवमद्भिः प्रक्षालयेति। अथवा गुरुग हे

लोहोपलजलशुद्ध्यादिः स्त्रीशूद्राभ्यां समाचर्यमाणः प्रमाणीकर्तव्यः। एतावदाचारस्य स्त्रीशूद्रसम्बन्धिनः प्रामाण्यार्थो यं श्लोको युज्यते। ननु सर्वस्याचारस्यावेदवित्सम्बन्धिनः प्रामाण्यं (कथं) घटते ?। अयुक्तमेतत्। न हि स्वल्पो प्याचारः अवेदविदां प्रमाणीभवति। अथास्ति मूलं वेदवित्सम्बन्धः स एव तर्हि प्रमाणम्, किं स्त्रीग्रहणेन ?। न चैवंविधे विषये स्त्रीशूद्राचारस्य प्रामाण्यमभिप्रेतम्। तथा हि सति प्रामाण्याभिधानप्रकरण एवावक्ष्यत्। तस्माच्छ्र्यःपदार्थनिरूपणार्थो यमुपोद्धात इतिः। यद्वा चार्यवचसां प्रामाण्यानुवादो यम्-यत् स्त्रीशेद्रावपि ब्रूयातां तदप्यनुष्ठातुं युक्तम्, किं पुनराचार्योपदिष्टम्। यत्र चास्य रमेत्परितुष्येन्मनः। 'एतदप्यात्मनस्तुष्टि'रित्यत्र व्याख्यातम्। सर्वथा नास्य श्लोकस्यातीव प्रयोजनमस्ति।। २२३।।

**धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।।**

**अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः।। २२४।।**

**अन्वय** - इह धर्मार्थौ श्रेयः उच्यते, कामार्थौ च, धर्मः एव, अर्थश्चैव वा श्रेयः, त्रिवर्ग इति तु स्थितिः।

**हिन्दी अर्थ** - इस संसार में कोई धर्म और अर्थ को कल्याणकारी कहते हैं, कोई काम और अर्थ को, कोई धर्म को ही अथवा कोई अर्थ को ही श्रेय कहते हैं "धर्म, अर्थ और काम इन तीनों का वर्ग ही इस संसार में श्रेयस्कर है यही वास्तविक सिद्धान्त है।। २२४।।

**मेधातिथिः।** यत्प्रशस्यं यदाचर्यमाणं द ष्टाद ष्टे नोपहन्ति यच्छ्रेयो लोके उच्यते, किं पुनस्तदिति सहृद्भूत्वा न्वाचष्टे। नायं वेदमूलो र्थो नाचार्यादिशब्दवत्पदार्थकथनम्। किं तर्हि ?श्रेयो र्थी सर्वः पुरुषः प्रवर्तते। तत्रेदमुच्यते-इदं श्रेयः एतदर्थं यत्नः कर्तव्यः।

तत्र मतान्तराणि तावदुपन्यस्यति। केषा चिन्मतं धर्मार्थो श्रेयः। धर्मः शास्त्रविहितौ विधिप्रतिषेधौ। अर्थः गोभूमिहिरण्यादिः। एतदेव श्रेयः एतदधीनत्वात्पुरुषप्रीतेः। अपरं मतं कामार्थाविति। कामस्तावन्मुख्य एव पुरुषार्थः। प्रीतिर्हि श्रेयः। अर्थो पि तत्साधनत्वात्। एवं हि चार्वाका आहुः-'काम एवैकः पुरुषार्थस्तस्य साधनमर्थः धर्मो पि यद्यस्ति'। धर्म एव सर्वेभ्यः श्रेयान्सर्वस्य तन्मूलत्वाच्च। उक्तं च "धर्मादर्थश्च कामश्च" इति। अर्थ एवेति वणिजःप्रयोगजीविनः। सिद्धान्तस्तु त्रिवर्ग इति तु स्थितिः। अतो धर्माविरोधिनावर्थमामावपि सेवितव्यौ न तद्विरोधिनौ। तथा च गौतमः (अ० ६ सू० ४६)। "न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् यथाशक्ति धर्मार्थकामेभ्यः" इति। त्र्यात्मको वर्गस्त्रिवर्गः। त्रिषु समुदितेष्वयं रूढः।। २२४।।

**आचार्यश्च पिता चैव माता भ्राता च पूर्वजः।।**

**नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः।। २२५।।**

**अन्वय** - आर्तेन अपि आचार्यः पिता च माता चैव पूर्वज भ्राता च नाममन्तव्याः।

**हिन्दी अर्थ** - स्वयं दुःखी होते हुए किसी को भी आचार्य, पिता, माता तथा बड़े भाई का अपमान नहीं करना चाहिये। विशेषरूप से ब्राह्मण को तो कभी इनका अपमान नहीं करना चाहिए।। २२५।।

**मेधातिथिः।** अन्यो पि न कश्चिदवमन्तव्यः, एते पुनर्विशेषतः। प्रायश्चित्ताधिक्यमत्रेत्यर्थः। आर्तेन तेः पीडितेनापि। अवमानमवज्ञा, प्राप्तायाः पूजाया अकरणं न्यक्कारश्चानादराख्यः। ब्राह्मणग्रहणं पूरणार्थम्।।२२५।।

**आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।।**

**माता प थिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः।। २२६।।**

**अन्वय** - आचार्यः ब्रह्मणः मूर्तिः, पिता प्रजापतेः मूर्तिः माता प थिव्या मूर्तिः स्वः भ्राता आत्मनः मूर्तिः।

**हिन्दी अर्थ** - आचार्य वेद-ज्ञान देने से ब्रह्मा की मूर्ति रूप है, पिता पालन करने से प्रजापति की मूर्ति है, माता पालन व सहनशीलता के कारण प थिवी की मूर्ति है, अपना बड़ा भाई सहायक होने से अपनी आत्मा की ही मूर्ति है।।२२६।।

**मेधातिथिः।** पूर्वस्यायमर्थवादः। यत्परं ब्रह्म वेदान्तोपनिषत्प्रसिद्धं तस्य आचार्यो मूर्तिः शरीरम्। मूर्तिरिव मूर्तिः। प्रजापतेर्हिरण्यगर्भस्य पिता। येयं प थिवी सैव माता, भारसहत्वसामान्यात्। भ्राता च स्वः सोदर्यः आत्मनः क्षेज्ञस्येति प्रशंसा। एते सर्वे देवतारूपाः महत्त्वयुक्ता अवमता ध्नन्ति, प्रसादिता अभिप्रेतैः कामैर्योजयन्ति। एवं तत्समा आचार्यादय इति स्तुतिः।। २२६।।

**यं मातापितरौ क्लेशं सहेते सम्भवे न णाम्।।**

**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि।। २२७।।**

**अन्वय** - मातापितरौ न णां सम्भवे यं क्लेशं सहेते तस्य निष्कृतिः वर्षशतैरपि न कर्तुं शक्या।

**हिन्दी अर्थ** - माता और पिता सन्तानों को उत्पन्न और पालनपोषण करने में जिस कष्ट को सहन करते हैं उसका बदला सौ वर्षों में भी नहीं चुकाया जा सकता।। २२७।।

**मेधातिथिः।** भूतार्थानुवादेनेयमपरप्रशंसा। क्लेशं दुःखं माता च पिता च न न णामपत्यानां सम्भवे गर्भात्प्रभ ति यावद्दशमाद्वर्षात्। मातुः क्लेशः गर्भधारणम्। प्रसवः प्राणहरः स्त्रीणाम्। जातस्य व संवर्धनयोगः क्लेशः। स सर्वस्य स्वयं संवेद्यः। पितुरप्युपनयनात्प्रभ ति आ वेदार्थव्याख्यानात्। सम्भवशब्देनात्र गर्भाधानमुच्यते। तद्धि न क्लेशावहम्, किं तर्हि ? तदुत्तकालभाविन्य एताः क्रियाः, ता हि क्लेशसाध्याः। न तस्य क्लेशस्य निष्कृतिरान ण्यं प्रत्युपकारसमत्वं शक्यं कर्तुं वर्षशतैर्जन्मभिर्बहुभिः, किं पुनरेकेन जन्मना?। असंख्यधनदानेन महत्या वा पद उद्धरणेन मातापित्रोर्निष्कृतिरिति।। २२७।।

**तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा।।**

**तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते।। २२८।।**

**अन्वय** - तयोः आचार्यस्य च नित्यं सर्वदा प्रियं कुर्यात् तेषु तुष्टेषु एव सर्वं तपः समाप्यते।

**हिन्दी अर्थ** - उन दोनों अर्थात् माता-पिता का और आचार्य का प्रतिदिन हर समय प्रिय कार्य करता रहे इन तीनों के संतुष्ट होने में ही सब तप पूर्ण हो जाता है।। २२८।।

**मेधातिथिः।** तस्यात्तयांर्मातापित्रोराचार्यस्य च सर्वदा यावज्जीवं यत्प्रियं तेषां तत्कुर्यात्, न सकृद् द्विस्त्रिर्वा कृत्वा कृती भवेत्। तेष्वेवाचार्यादिषु त्रिषु तुष्टेषु भक्त्याराधितेषु तपः सर्वं बहून्वर्षगणांश्चान्द्रायणादि तपस्तप्त्वा यत्फलं प्राप्यते तत्तत्परितोषादेव लभ्यत इति।। २२८।।

**तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।।**

**न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत्।।२२६।।**

**अन्वय** - तेषां त्रयाणां शुश्रूषा परमं तपः उच्यते तैरनभ्यनुज्ञातः अन्यं धर्मं न समाचरेत्।

**हिन्दी अर्थ** - आचार्य, माता और पिता इन तीनों की सेवा करना ही श्रेष्ठ तप कहा गया है इनकी अनुमति के बिना अन्य किसी धर्म का आचरण न करें।। २२६।।

**मेधातिथिः।** "कथं पुरस्तपःफलमतपसा मात्रादिशुश्रूषया ?" यस्मात् एतच्च सर्वोत्तमं तपो यत् तेषां पादसेवनम्। तैरननुज्ञातो माणवकः धर्ममन्यं तत्सेवाविरोधिनं तीर्थस्नानादिरूपं व्रतोपवासादि च शरीरशोषणया तेषां चित्तखेदकरम्। ज्योतिष्टोमानुष्ठाने प्यनुज्ञा ग्रहीतव्या। यतो वमानप्रतिषेधः कृतः। महारम्भेषु च कर्मसु बहुधनव्ययायाससाध्येषु मुह्यमाना अवमन्तव्या भवेयुः। नित्यकर्मा नुष्ठाने त्वनुज्ञा नोपकारिणी।। २२६।।

**त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।।**

**त एव हि त्रयो वेदास्त एवोक्तास्त्रयो ग्नयः।।२३०।।**

**अन्वय** - त एव हि त्रयो लोकाः ते एव त्रयः आश्रमाः ते एव हि त्रयः वेदाः ते एव एव त्रयः अग्नयः उक्ताः।

**हिन्दी अर्थ** - वे ही तीनों-प थ्वी, आकाश, अन्तरिक्ष लोक हैं, वे तीनों ही-ब्रह्मचर्य, ग हस्थ एवं संन्यास आश्रम हैं, वे ही तीन-ऋक्, यजुः, साम, वेद हैं, वे ही तीन अग्नियां मानी हैं।। २३०।।

**मेधातिथिः।** कार्यकारणयोरभेदादेवमुच्यतते। त्रयाणां लोकानां प्राप्तिहेतुत्वात्त एव त्रयो लोका उच्यन्ते। त एव च त्रयः। प्रथमाद्ब्रह्मचर्यादन्ये त्रय आश्रमाः। गार्हस्थ्यादिभिस्त्रिभिराश्रमैर्यत्फलं प्राप्यते तत्तैस्त्रिभिस्तुष्टैः। त एव त्रयो वेदा वेदत्रयजपतुल्यफलत्वात्। त एव त्रयो ग्नयः। अग्निसाध यकर्मानुष्ठानफलावाप्तेस्तच्छुश्रूषातः। एषा पि प्रशंसैव।।२३०।।

**पिता वै गार्हपत्यो ग्निर्माता ग्निर्दक्षिणः स्म तः।।**
**गुरुराहवनीयस्तु सा ग्नित्रेता गरीयसी।। २३१।।**

**अन्वय** - पिता वै गार्हपत्यः अग्निः माता दक्षिणः अग्निः स्म तः गुरुः तु आहवनीयः सा अग्नित्रेता गरीयसी।

**हिन्दी अर्थ** - पिता गार्हपत्य अग्नि के समान है, माता दक्षिण अग्नि के समान है और गुरु आहवनीय अग्नि के समान है। इन तीनों अग्नियों का समूह सर्वश्रेष्ठ है। अर्थात् जिस प्रकार यज्ञ की इन तीन अग्नियों का श्रेठ फल है, वही फल इन तीनों की सेवा में है।। २३१।।

**मेधातिथिः।** केनचित्सामान्येनायं पित्रादीनां गार्हपत्यादिव्यपदेशः। सा ग्नित्रेता आधानाग्नित्रेता या गरीयसी महाफला। त्राणं त्राणार्थमिता प्राप्ता त्रेता इति शब्दव्युत्पत्तिः।।२३१।।

**त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्ग ही।।**
**दीप्यमानः स्ववपुषा देववद्दिवि मोदते।। २३२।।**

**अन्वय** - ग ही एतेषु त्रिषु अप्रमाद्यन् स्ववपुषा दीप्यमानः दिवि देववत् मोदते।

**हिन्दी अर्थ** - ग हस्थी व्यक्ति इन तीनों की सेवा में प्रमाद न करता हुआ तीनों लोकों को जीतता है। अपने शरीर से देदीप्यमान होता हुआ द्युलोक में=स्वर्ग में देवता के समान प्रसन्नता को प्राप्त होता है।। २३२।।

**मेधातिथिः।** एतेष्वप्रमाद्यन्नाराधने स्खलन्। तथा च तदाराधनात्त्रीन् लोका जयेत्स्वीकुर्यादापित्यमाप्नुयात्। ग ही, ग हस्थावस्थस्य हि पुत्रस्य पित्रादीनां तत्कृतमाराधनमुपयुज्यते। तदा हि तौ वुद्धौ भवतः। दीप्यमानः शोभमानः प्रकाशकानो वा स्वेनैव तेजसा। देववदादित्यवद्दिवि लोके मोदते।। २३२।।

**इमं लोकं मात भक्त्या पित भक्त्या तु मध्यमम्।।**
**गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते।। २३३।।**

**अन्वय** - इमं लोकं मात भक्त्या मध्यमं तु पित भक्त्या एवम् गुरुशुश्रूषया ब्रह्मलोकं समश्नुते।

**हिन्दी अर्थ** - मनुष्य इस प थ्वी लोक को माता की सेवा करने से मध्यम आकाश लोक को पिता की सेवा करने से इसी प्रकार गुरु की सेवा करने से मोक्ष को प्राप्त करता है।। २३३।।

**मेधातिथिः।** अयं लोकः प थिवी। भारसहत्वात्तुल्या माता प थिव्याः। पित भक्त्या मध्यमो लोको न्तरिक्षम्। प्रजापतिः पितोक्तः। मध्यमस्थानश्च प्रजापतिर्नैरुक्तनाम्। स हि वर्षकर्मणां प्रजानां पाता वा पालयिता वा। ब्रह्मलोकमादित्यलोकम्। आदित्यो ब्रह्मेत्यादेशः। लोकः स्थानविशेषस्तमश्नुते प्राप्नोति। अर्थवादा एते। तत्र नाभिनिवेष्टव्यम्। न च लोकाधिपत्यकामस्य तदाराधनाधिकारः। नायं काम्यो विधिः। पित त्वमेवात्र निमित्तम्, अकरणे शास्त्रातिक्रमः।।२३३।।

**सर्वे तस्याद ता धर्मा यस्यैते त्रय आद ताः।।**
**अनाद तास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः।। २३४।।**

**अन्वय** - यस्य एते त्रयः आद ताः तस्य सर्वे धर्माः आद ताः यस्य तु एते अनाद ताः तस्य सर्वाः क्रियाः अफला।

**हिन्दी अर्थ** - जिसने इन तीनों-आचार्ये, माता, पिता का आदर रखा है, मानो उसने सभी धर्मो का आदर किया है, अर्थात् सभी धर्मों का पालन किया है जिसने इनका आदर नहीं रखा है उसकी सब श्रेष्ठ क्रियाएं निष्फल रहती हैं।।२३४।।

**मेधातिथिः।** आद ताः सत्कृताः। आद तवचनेन प्रत्युपकारपरत्वं लक्ष्यते। यो ह्यद तो भवति स परितुष्टः प्रत्युपकाराय यतते। अथवा आद ताः परितुष्ट उच्यते। धर्मस्य चानन्त्यात्परितोषानुपपत्तेः फलदानोत्सुकत्वं लक्ष्यते। सर्वाणि तस्य कर्माण्याशु फलदायीनि भवन्ति। यस्यैते त्रय आद ताः शुश्रूषया परितुष्टाः। एतैस्त्वनाराधितैर्यत्फलकामेन कि चित् क्रियते शुभं कर्म तत्सर्वं निष्फलम्। सर्वाः क्रियाः सर्वाणि श्रौतस्मार्तानि कर्माणि। अर्थवादो यम्,-पुरुषार्थो "ह्याराधनविधिः। तदतिक्रमे। पुरुषः प्रत्यवन्महता पापेन कर्मोपार्जिते पीष्टफलभोगे प्रतिबध्यते। अत उच्यते सर्वास्तस्याफलाः क्रिया इति।। २३४।।

**यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।।**

**तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः।।२३५।।**

**अन्वय** - ते त्रयः यावत् जीवेयुः तावत् अन्यं न समाचरेत् प्रियहिते रतः तेष्वेव नित्यं शुश्रूषां कुर्यात्।

**हिन्दी अर्थ** - वे तीनों जब तक जीयें तब तक इनकी सेवा-शुश्रुषा को छोड़कर किसी अन्य धर्म का प्रमुखता से पालन न करे, उनके प्रिय आचरण में लगा रहकर उनकी ही सेवा करता है।। २३५।।

**मेधातिथिः।** उक्तार्थो यं श्लोकः। नान्यं समाचरेद्द ष्टमद ष्टं वा तदनुज्ञानमन्तरेणेत्युक्तम्। तेष्वेव नित्यं शुश्रूषां कुर्यात्। प्रियहिते रतः। प्रियं च हितं च, तत्। यत्प्रीतिकरं तत् प्रियम् यत्पालनं तद् हितम्।। २३५।।

**तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्।।**

**तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः।। २३६।।**

**अन्वय** - तेषां अनुपरोधेन मनो वचन कर्मभि यद् यद् पारत्र्यं आचरेत् तत् तत् तेभ्यः निवेदयेत्।

**हिन्दी अर्थ** - उन माता, पिता, आचार्य के अविरुद्ध उनकी अनुमति से मन, वचन और कर्म के द्वारा जो-जो परलोक को शुभ करने वाला कार्य करे उस सबको उनसे प्रकट कर दे।। २३६।।

**मेधातिथिः।** परत्र जन्मान्तरे यस्य फलं भुज्यते तत्पारत्र्यम्। छान्सं रूपमेतत्। शुश्रूषाया अविरोधेनान्यं यं यं धर्मं समाचरेत्तं तं निवेदयेत्तेभ्यस्तान् ज्ञापयेत्। अनुपरोधग्रहणमेवमर्थ कृतम्। यत्तेषां विरोधि तत्र नैवानुज्ञां दापयितव्याः। कश्चिद जुप्रकृतिरभ्यर्थ्यमान आत्मपराधर्ममवगण यानुजानाति, तन्निव त्त्यर्थमेतत्। मनोवचनकर्मभिः। न निवेदनमद ष्टार्थमपि तु याद शमनुज्ञानं ताद शमेव कर्मणा दर्शयेत् अथवैवं सम्बन्धः कर्तव्यः-मनोवचनकर्मभिः पारत्र्यं यद्यदाचरेत्तत्तन्निवेदयेत्तेभ्य इति।। २३६।।

**त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते।।**

**एष धर्मः परः साक्षादुपधर्मो न्य उच्यते।। २३७।।**

**अन्वय** - एतेषु त्रिषु हि पुरुषस्य इतिकृत्यं समाप्यते एत साक्षात् परः धर्मः अन्य अपधर्मः उच्यते।

**हिन्दी अर्थ** - इन तीनों की सेवा करने से ही पुरुष के सब कर्त्तव्य पूर्ण हो जाते हैं,यही पुरुष का साक्षात् सर्वश्रेष्ठ धर्म है अन्य सभी धार्मिक कार्य इसकी अपेक्षा गौण धर्म हैं।। २३७।।

**मेधातिथिः।** इतिशब्दः समाप्तिवचनः कात्स्न्यं गमयति। यत्कि चन पुरुषस्य कर्तव्यं यावान्कश्चन पुरुषार्थः स एतेष्वाराधितेषु समाप्यते परिपूर्णमनुतिष्ठतो भवति। एष धर्मः परः श्रेष्ठः साक्षात्वेन।

अन्ययश्चाग्निहोत्रादिरूपधर्मः, प्रतिहारस्थानीय न साक्षाद्रजवत् इति प्रशंसा। अवतानप्रतिषेधः प्रियहतिमरणं, तद्विरोधिनः कर्तव्यस्याननुष्ठानम् अविरोधिनो प्यननुज्ञातस्य च। परिशिष्टः श्लोकसंघातो र्थवादः।। २३७।।

**श्रद्धानः शुभां विद्यामाददीतावरादपि।।**
**अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि।। २३८।।**

**अन्वय** - शुभां विद्यां श्रद्धानः अवरात् अपि आददी अन्त्यात् अपि परं धर्मम् दुष्कुलादपि स्त्रीरत्नम्।

**हिन्दी अर्थ** - उत्तम विद्या प्राप्ति की श्रद्धा करता हुआ पुरुष अपने से न्यून से भी विद्या पावे तो ग्रहण करे, नीच जाति से भी उत्तम धर्म का ग्रहण करे और निंद्यकुल से भी स्त्रियों में उत्तम स्त्री का ग्रहण करे, यह नीति है।। २३८।।

**मेधातिथिः।** श्रद्धान अस्तिक्योपग हीतान्तरात्मा भियुक्तो यः शिष्यः स शुभां विद्यां न्यायशास्त्रादितर्कविद्याम्। अथवा या शोभते केवलं सा विशदकाव्यभरतादिविद्याविभूषिता-मन्त्रविद्या वा न धर्मोपयोगिनी-तामवरादपि हीनजातीयादप्याददीत शिक्षेत। न त्यत्र शुभा वेदविद्या वेदितव्या, आपदि विधिर्भविष्यति (२४१), अनापदि तु नैवेष्यते। या त्वशुभा शाम्भवी मायाकुहकादि वा तां न क्वचित्। अन्त्यश्चाण्डालस्तस्मादपि यः परो धर्मः श्रुतिस्म त्यपेक्षया परो न्यः लौकिकः। धर्मशब्दो व्यवस्थायामपि प्रयुज्यते। 'एषो त्र धर्म' इति यदि चाण्डालो पि ब्रूते-'अत्र प्रदेशे मा चिरं स्थाः', 'मा वा स्मिन्नम्भसि स्नासीः' 'एषो त्र ग्रामीणानां धर्मः, राज्ञा कृता वा मर्यादे'ति-न चैवं मन्तव्यम्-'उपाध्याय-वचनं मया कर्तव्यं धिक् चाण्डालं जाल्मं यो मां नियुङ्क्त' इति। न पुरनियं कर्तव्या-परो धर्मो ब्रह्मतत्त्वज्ञानम्। न हि चाण्डालादेस्तत्परिज्ञानसम्भवः, वेदार्थवित्त्वाभावात्। न चान्यतरस्तत्सम्भवः। न हि व श्चिकमन्त्राक्षरवद्ब्रह्मोपदेशो स्ति।

स्त्रीरत्नमिव। स्त्री चासौ रत्नं च तदिति वा। "उपमितं व्याघ्रादिभिः" (पा० सू० २।१।५६), "विशेषणं विशेष्येणेति" (पा०सू० २।१।५७) वा। यदा यत्कि चिदुत्कृष्टं वस्तु तद्रत्नमुच्यते तदा विशेषणमिति। अथ तु मरकतपद्मरागादीन्येव रत्नशब्दवाच्यानि उत्कर्षसामान्यादन्यत्र प्रयोगः, तदीपमितमिति। या स्त्री कान्तिसंस्थानलावण्यातिशयवती अथ धान्यबहुधनसुतादिशुभलक्षणा सा दुष्कुलाद्धीनक्रियादेरप्यानेया। 'अब्राह्मणा'दित्यस्य (२४१) विधेरयमपुपोद्घातः। अलाभेन तु प्रदर्शितः।। २३८।।

**विषादप्यम तं ग्राह्यं बालादपि सुभाषितम्।।**
**अमित्रादपि सद्व त्तममेध्यादपि का चनम्।। २३६।।**

**अन्वय** - विषादपि अम तं ग्राह्यं बालादपि सुभाषितम् अमित्रादपि सद्व त्तम् अमेध्यादपि का चनम्।

**हिन्दी अर्थ** - विष से भी अम त का ग्रहण कर लेना चाहिए, और बालक से भी उत्तम वचन को ग्रहण कर लेना चाहिए और वैरी से भी श्रेष्ठ आचरण सीख लेना चाहिए, तथा अशुद्ध स्थान से भी स्वर्ण या मूल्यवान् वस्तु को प्राप्त कर लेना चाहिए।। २३६।।

**मेधातिथिः।** पूर्वं इमौ चापद्यब्राह्मणादप्यध्येतव्यमित्यस्य विधेः शेषः। अनेन लोकप्रवादो द ष्टान्तीक्रियते। एवं हि लौकिका आहुः 'असतस्सदुपादेयम्।' विषे पि यदम तं तद्याह्यमेव यथा हंस उदकात्क्षीरं ग ह्णाति। रसायनेषु केषुचिद्विषं इत्येदभिप्रेत्योक्तम्। बालो पि यत्कि चिदकस्मात्सुभाषितं माङ्गलिकं प्रस्थानादौ वक्ति तद्ग्राह्यम्। अमित्रादेरपि सत्तां यद्व त्तम् शिष्टाचारः। न द्वेष्यः-तेनेतदाचरितमिति त्याज्यम्। प्रसिद्धतरो यं द ष्टान्तः-अमेध्यादपि का चनं सुवर्णम्। असदाश्रयादप्येते, तथा ग ह्यन्ते तद्वदब्राह्मणादध्ययनमिति।।२३६।।

**स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।।**
**विविधानि च शिल्पानि समादेयानि सर्वतः।।२४०।।**

**अन्वय** - स्त्रियः रत्नानि विद्या धर्मः शौचम् सुभाषितम् विविधानि शिल्पानि सर्वतः समादेयानि।

**हिन्दी अर्थ** - उत्तम स्त्री नाना प्रकार के रत्न, विद्या, सत्य, पवित्रता, श्रेष्ठभाषण और नाना प्रकार की शिल्पविद्या अर्थात्! कारीगरी सब देश तथा सब मनुष्यों से ग्रहण करे।।२४०।।

**मेधातिथिः।** रत्नानि मणयः शम्बरपुलिन्दादिभ्यो प्युपात्ताः शुद्धास्तद्वद्विद्याद्यपीति। शिल्पानि च विचित्रपत्रच्छेद्यादीन्यदुष्टान्यगर्हितानि चैलनिर्णजनपटर जनबन्धनादीनि। सर्वतो जातिविशेषमनपेक्ष्य समादेयानि स्वीकर्तव्यानि निश्चितातिधैर्यभावेः। विषादप्यम तमित्येवमादिभिरनेकवाक्यत्वात् समानप्रकमत्वेन सर्वं एते र्थवादाः।। २४०।।

**अब्राह्मणादध्ययनमापत्काले विधीयते।।**

**अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः।। २४१।।**

**अन्वय** - आपत्काले अब्राह्मणात् अध्ययनम् विधीयते यावत् अध्ययनम् गुरोः अनुव्रज्या शुश्रूषा च।

**हिन्दी अर्थ** - आपत्ति काल में अब्राह्मण अर्थात् क्षत्रिय आदि से भी विद्या ग्रहण करना विहित है, शिष्य जब तक पढ़े तब तक गुरु की आज्ञा का पालन और सेवा करे।। २४१।।

**मेधातिथि।** अयं त्वत्र विधिः आपद् ब्राह्मणाध्यापकाभावः। आपद् काल आपत्कालः। आपदित्येव सिद्धे कालग्रहणं व त्तपूरणार्थम्। पाठान्तरं 'आपत्कल्प' इति। कल्पनं 'कल्पः' आपद्येषां कल्पना विधीयते उपदिश्यते। यदा चार्यः प्रारब्धाध्यापनः प्रायश्चित्तेनान्येन वा निमित्तेन शिष्यं हित्वा देशान्तरं व्रजेत्, न च ब्राह्मणो न्यो ध्यापकस्तस्मिन्देशे लभ्यते, बालत्वाददूरदेशगमनमशक्यम्, तदा ब्राह्मणात् क्षत्रियात्तदभावे वैश्यादध्ययनम्। प्रकृतत्वात्-'वेदः कृत्स्न' इति-वेदग्रहणं विधीयते।

यद्यप्यत्राब्राह्मणशब्दो ब्राह्मणजातेरन्यत्र जातित्रये वर्तमानं पुरुषत्वमाचष्टे, तथापि नेह शूद्रस्य ग्रहणम्, तस्याध्ययनाधिकाराभावात्। सत्यध्ययने ध्यापकत्वम्। अथ "शास्त्रातिक्रमेण शूद्रस्याप्यध ीतवेदत्वस्य सम्भवः, क्षत्रियवैश्ययोरध्यापकत्वस्येव" तदपि न। यतो धारणे शरीरभेदस्तस्याम्नातः। ततो दण्महत्त्वात् महदेतदकार्यमनुमीयते। निन्दितकर्माभ्यासे पतनं तत्संसर्गाच्च ब्रह्मचारिणो त्यन्तदुष्टता स्यात्। "क्षत्रियवैश्ययोरध्यापकत्वनिषेधात् तुल्यदोष" इति चेतदस्त्यत्र विशेषः। यत्र दण्डप्रायश्चित्ते गुरुणी तत्र महादोषता, स्वल्पयोस्तु स्वल्पदोषता। न च क्षत्रियवैश्ययोरध्यापने महती दण्डप्रायश्चित्ते, शुद्रस्येव। कि च द्वे निन्दिते कर्मण्यध्ययनमध्यापनं च, क्षत्रियवैश्ययोस्त्वेकमेव। निषिद्धाध्यापनसंसर्गस्त्वनेनैवानुज्ञातः, नासौ दोषकरः। निषिद्धाध्ययनेन तु शूद्रेण संसर्गे न किंचित्प्रमाणमस्ति। अनुव्रज्या च शुश्रूषा। वन्दनपादप्रक्षालनादिशुश्रूषाप्रतिषेधार्थमनुव्रज्यैव शुश्रुषा, नान्येति। यावदध्ययनम् यावद्ग्रहणम्।। २४१।।

**नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।।**

**ब्राह्मणे वा ननूचाने काङ्क्षन्गतिमनुत्तमाम्।। २४२।।**

**अन्वय** - अनुत्तमां गतिं कांक्षन शिष्यः अब्राह्मणे गुरौ अननूचाने ब्राह्मणे च आत्यन्तिकं वासं न वसेत्।

**हिन्दी अर्थ** - उत्तमगति चाहने वाले शिष्य को चाहिए कि वह अब्राह्मण गुरु के यहाँ और वेदों में अपारंगत=सांङ्गोपाङ्ग वेदों के अध्यापन में असमर्थ ब्राह्मण गुरु के समीप भी आजीवन निवास न करे, क्योंकि इनके पास शिष्य की प्रगति रुक जाती है। सांगोपांग वेदों के ज्ञाता विद्वान् के पास रहकर ही उन्नति की उत्तम गति तक पहुंच सकता है।। २४२।।

**मेधातिथिः।** अब्राह्मणे गुरौ वासो ध्ययनाय पूर्वेणोक्तो नैष्ठिकस्यापि प्राप्तो विशेषेण निषिध्यते। आत्यंतिकं वासं यावज्जीविकम्। न वसेन्न कुर्यात्। वासं वसेदिति। सामान्यविशेषभावाद्वासं वसेदिति सम्बन्धः कल्प्यः। गुरुविषयो वासस्तं वसेत्। समाप्ताध्ययनो न्यैत्र गच्छेत्। "ननु चाध्ययनमात्रमनुज्ञातमात्यन्तिकस्य वासस्य कुतः प्राप्तिः ?" नैष दोषः। गुरौ तस्य वास उक्तः। अध्यापयिता च 'गुरु'रुक्तः। अतो भवत्याशङ्का। ब्राह्मणे वा ननूचाने। वाशब्दो प्यर्थः। ब्राह्मणो पि

यदि अनुचानः व त्ताभिजनसम्पन्नो न भवति, न च व्याख्यानाध्ययनशीलः। अनुवचनेनैते पि गुणा लक्ष्यन्ते यतो ननुवक्तर्यथाभावादेवावासः सिद्धः। गतिरत्र सुखातिशयप्राप्तिर्विवक्षिता। अनुत्तमा, यस्या अन्योत्तमा नास्ति, ता काङ्क्षन्परमात्मानन्दरूपं मोक्षम्।।२४२।।

**यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले।।**
**युक्तः परिचरेदेनमा शरीरविमोक्षणात्।। २४३।।**

**अन्वय** - यदि तु गुरोः कुले आत्यन्तिकं वासं रोचयेत अशरीरविमोक्षणात् एनम् युक्तः परिचरेत्।

**हिन्दी अर्थ** - यदि ब्रह्मचारी शिष्य गुरुकुल में जीवन-पर्यन्त निवास करना चाहे तो शरीर छूटने पर्यन्त अपने गुरु की प्रयत्नपूर्वक सेवा करे।। २४३।।

**मेधातिथिः।** अत्यन्तं भवमात्यन्तिकं वासं गुरोः कुले नैष्ठिकं ब्रह्मचर्यं यदि रोचयेत्तदा युक्तस्तत्परः। परिचरेदेनं गुरुम्-आ शरीरस्य विमोक्षणात्पाताद्-यावच्छरीरं ध्रियत इत्यर्थः।।२४३।।

**आ समाप्तेः शरीरस्य यस्तु शूश्रूषते गुरुम्।।**
**स गच्छत्य जसा विप्रो ब्रह्मणः सद्म शाश्वतम्।। २४४।।**

**अन्वय** - यः तु शरीरस्य आ समाप्तेः गुरु शुश्रूषते सः विप्रः ब्रह्मणः शाश्वतं सद्म अ जसा गच्छति।

**हिन्दी अर्थ** - जो शरीर के त्याग होने तक अर्थात् म त्युपर्यन्त गुरु की सेवा करता है, वह विद्वान् व्यक्ति परमात्मा के नित्यपद मोक्ष को शीघ्र प्राप्त करता है।। २४४।।

**मेधातिथिः।** नैष्ठिकब्रह्मचर्यस्य फलविधिरयम्। शरीरस्य समाप्तिर्जीवितत्यागः। आ ततः कालाद्यो गुरुं शूश्रूषते परिचरति। स गच्छति विप्रः। ब्राह्मणः सद्म सदनं स्थानं शाश्वतं, न पुनः संसारं प्रपिद्यत इति यावत्। अ जसा क्लिष्टेन मार्गेण। न गत्यन्तरेण तिर्यक्प्रेतमनुष्यादिजन्मना व्यवधीयते। ब्रह्मशब्देन चेतिहासदर्शने देवविशेषश्चतुर्वक्त्रः, तस्य सद्म स्थानविशेषः, दिवि विद्यते। वेदांतवादिनां तु ब्रह्म परमात्मा, तस्य सद्म स्वरूपमेव, तद्भावापत्तिः।। २४४।।

**न पूर्वं गुरवे कि चिदुपकुर्वीत धर्मवित्।।**
**स्नास्यंस्तु गुरुणा ज्ञप्तः शक्त्या गुर्वर्थमाहरेत्।। २४५।।**

**अन्वय** - धर्मवित् स्नास्यन् तु गुरुणा आज्ञप्तः शक्त्या गुर्वर्थम् आहरेत् पूर्वं गुरवे कि चित् न उपकुर्वीत।

**हिन्दी अर्थ** - विधि का ज्ञाता शिष्य स्नातक बनने अर्थात् समावर्तन कराने की इच्छा होने पर गुरु से आज्ञा प्राप्त करके शक्ति के अनुसार गुरु के लिए दक्षिणा प्रदान करे। किन्तु समावर्तन से पहले गुरु को दक्षिणा या भेंट रूप में कुछ नहीं देना चाहिए।। २४५।।

**मेधातिथिः।** नैष्ठिकस्यायं गुरवे र्थदानं प्रतिषिध्यते। स्नास्यतो गुर्वर्थविधानात्। न च नैष्ठिकस्य स्नानमस्ति। प्रकृतश्च नैष्ठिक एव। उपकुर्वाणिस्य तु उपनयनात्प्रभ ति यावत्स्नानमस्त्येव सति सम्भवे यथाशक्त्या दानम्। पूर्वं स्नानाद् गुरवे कि चिदुपकुर्वीत दद्याद्, ददात्यर्थ धातुः सोपसर्गो तश्च स्वसाध्या चतुर्थी। अथवा क्रियाग्रहणमपि कर्तव्यमिति, ततः सम्प्रदानत्वम्। धर्मवित्पदमनुवादः। स्नास्यंस्तु स्नानकाले प्राप्ते गुरुणा आदिष्टम् 'अमुमर्थमाहरेति।' ततः शक्त्या यावन्तं शक्नोति तावन्तम्। गुर्वर्थम्। गुरोरिदं गुर्वर्थम्। गुरोर्येन प्रयोजनं तमाहरेदुपनयेत्।

"नन्वयं नैष्ठिकस्य गुर्वर्थकरणप्रतिषेधः।"

न ह्येते द्वे वाक्ये, एकेन प्रतिषेधः, अपरेण गुर्वर्थविधिः। स्नाने गुर्वर्थो वश्यं कर्तव्य इत्ययं विधिः। प्रतिषेधस्तच्छेषः। उपकारप्रतिषेधे च सर्वशुश्रूषाविधिरनर्थकः स्यात्। न च दानमेवोपकारः, येन धनोपकार एव निषिध्येत, नान्यः प्रियहितादिः। अर्थवादत्वे त्वयथार्थता न दोषः। गम्यते चात्रैकवाक्यता।। २४५।।

**क्षेत्रं हिरण्यं गामश्वं छत्रोपानमासनम्ः।।**

**धान्यं वासांसि शाकं वा गुरवे प्रीतिमावहेत्।। २४६।।**

**अन्वय** - क्षेत्रम् हिरण्यम् गाम अश्वम् छत्रोपानहमासनम् धान्यं वासांसि शाकम् वा गुरवे प्रीतिमावहेत्।

**हिन्दी अर्थ** - भूमि, सोना, गाय, घोड़ा, छाता, जूता, आसन, अन्न, वस्त्र अथवा शाक गुरु के लिए प्रीतिपूर्वक दक्षिणा में दे।। २४६।।

**मेधातिथिः।** उक्तमुद्दिष्टं 'गुर्वर्थं' कुर्यात्तत्र न सर्वं कर्तव्यमित्येवमर्थो यं श्लोकः। यदि गुरुविरुद्धमादिशेत्-'अमुष्य स्त्रियमाहरेति', 'सर्वस्वं वा देहीति'-तन्न कर्तव्यम्। किं तर्हि ? क्षेत्रं-धान्यानां भवनभूमिः क्षेत्रमुच्यते। हिरण्यं सुवर्णम्। वाशब्दो विकल्पार्थः। न समुदितानि देयानि। अन्ततः अन्याभावे छत्रोपानहमपि। द्वन्द्वनिर्देशात्साहित्यदानम्। वासांसीति सर्वत्र संख्या न विवक्षिता। प्रीतिमाहरन्निति। एतदाहरेदिति पूर्वसम्बन्धः। 'प्रीतिमाहरेदिति' वा पाठे अत्रैव क्रियापरिसमाप्तिः। 'प्रीतिमावहेदिति' वा। प्रीतिमुत्पादयितुं धान्याद्याहरेत्। स्वतन्त्रैव वा प्रीतिराहार्यतयोच्यते। ततश्च द्रव्योपदेशस्य प्रदर्शनार्थता सिद्धा भवति। अन्यदपि यदेवंविधं प्रीतिजनकम्, मणिमुक्ताप्रवालहस्त्यश्वतरीरथादि, तदपि देयमिति गम्यते। तथा च गौतमः (अ० ३ सू० ४८) "विद्यान्ते गुरुमर्थेन निमन्त्र्यः।" आहरेद्यदि स्यादात्मीयं शक्त्यागतं तदा च चेद् याच्ञदिना जयेत्।। २४६।।

**आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।।**

**गुरुदारे सपिण्डे वा गुरुवद्व त्तिमाचरेत्।।२४७।।**

**अन्वय** - आचार्यः तु खलु प्रेते गुणान्विते गुरुपुत्रे गुरुदारे सपिण्डे वा गुरुवत् व त्तिमाचरेत्।

**हिन्दी अर्थ** - आचार्य की यदि म त्यु हो जाये तो गुरुपुत्र में अथवा गुरुपत्नी में अथवा गुरु के वंश वाले योग्य व्यक्ति में गुरु के समान व्यवहार करे।। २४७।।

**मेधातिथिः।** नैष्ठिकस्यायमुपदेशः। असत्याचार्ये, तत्पुत्रे श्रोत्रियत्वादिगुणयुक्ते, गुरुपत्न्यामाचार्याण्यां वा-सपिण्डे वा, गुरोरेव वसेत् तत्र च गुरुवद्व त्तिमाचरेद् भैक्षनिवेदनादि सर्वं कुर्यात्। दारशब्दो बहुवचनान्तो भार्यावचनो वैयाकरणैः स्मर्यते। स्म तिकारास्त्वेकवचनान्तमपि प्रयु जते। "धर्मप्रजासंपन्ने दारे नान्यां कुर्वीते" ति इति।। २४७।।

**एतेष्वविद्यमानेषु स्थानासनविहारवान्।।**

**प्रयु जानो ग्निशुश्रूषां साधयेद्देहमात्मनः।। २४८।।**

**अन्वय** - एतेषु अविद्यमानेषु स्थानासनविहारवान् अग्निशुश्रूषां प्रयु जानः आत्मनः देहं साधयेत्।

**हिन्दी अर्थ** - इन गुरुपुत्र, गुरुपत्नी और सपिण्ड व्यक्ति के विद्यमान न होने पर शिष्य स्नान, आसन तथा अन्य नित्यकर्म करता हुआ अग्निहोत्र करते हुए अपने शरीर को साधे-तपस्या से संयमित करे।।

**मेधातिथिः।** अविद्यमानता सर्वेषामभावः, यदि वा गुणहीनता। एतेष्वसत्स्वग्निशुश्रूषां प्रयु जीत अग्निशरणोपलेपनं अग्नीन्धनं आचार्यवत्सन्निधाननियमाद् भ त्यवदहोरात्रासनम् एषा ग्नेः शुश्रूषा तां कुर्वन्देहं साधयेत् शरीरं क्षपयेत्। यथा न्ध्श्चक्षुष्मानुच्यत एवं साधयेदिति। स्थानासन एव विहारः तद्वान्-न कदाचिदासीत एवं विहरेत्। अन्ये तु मन्यन्ते-स्थानासन स्वस्तिकादिना यत् आसनं ध्यानकाले तत् स्थानासनं, विहारो न्यो भिक्षाचरणादिः।। २४८।।

**एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।।**

**स गच्छत्युत्तमस्थानं न चेह जायते पुनः।। २४६।।**

**अन्वय** - यः विप्रः एवम् अविप्लुतः ब्रह्मचर्यं चरति सः उत्तमं स्थानं गच्छति इह च पुनः न जायते।

**हिन्दी अर्थ** - जो द्विज विद्वान् उपर्युक्त प्रकार से अखण्डित रूप से ब्रह्मचर्याश्रम का सेवन करताहै, वह उत्तम स्थान अर्थात्, ब्रह्म के पद को प्राप्त करता है और इस संसार में पुनर्जन्म नहीं लेता अर्थात् प्रवाह में चलने वाले जन्म-मरण से छूट जाता है।। २४६।।

**इति मानवे धर्मशास्त्रे भ गुप्रोक्तायां संहितायां द्वितीयो ध्यायः।।२।।**

**मेधातिथिः।** एवमिति। नैष्ठिकव त्तिं प्रत्यवम शति। एवं यो ब्रह्मचर्यं चरत्यविप्लुतः। अस्खलः स प्राप्नोत्युत्तमस्थानं धाम परमात्मप्राप्तिलक्षणम्। न चेह पुनर्जायते न संसारमापद्यते। ब्रह्मरूपं सम्पद्यत इति। २४६।।

इति श्रीभट्टमेधातिथिविरचिते मनुभाष्ये द्वितीयो ध्यायः।।२।।

---- o -----